# सामान्यनिरुक्तिप्रकरणम्

महामहोपाध्याय- श्रीमद्गङ्गेशोपाध्यायकृत - मूलचिन्तामणि-
महामहोपाध्याय-श्रीमद्रघुनाथशिरोमणिकृत-दीधितिटीका-
महामहोपाध्याय-जगद्गुरु-श्रीमद्जगदीशतर्कालङ्कार-
कृत-दीधितिव्याख्या-

नवद्वीप-राष्ट्रियसंस्कृतमहाविद्यालयाध्यक्ष-न्यायशास्त्राध्यापक -
श्रीमद्यादवेन्द्रनाथराय न्यायतर्कतीर्थदेवशर्म-
विरचित तात्पर्यदीपिका व्याख्यासहितम्

भारतराष्ट्रसर्वकार-शिक्षामन्त्रकार्यानुकूल्येन मुद्रितम्
'With the Financial a sistance from the Ministry of Education, Government of India''

प्रथमं संस्करणम्

शकाब्दाः-१८९०

# सामान्यनिरुक्तिप्रकरणम्

महामहोपाध्याय - श्रीमद्गङ्गेशोपाध्यायकृत - मूलचिन्तामणि-
महामहोपाध्याय-श्रीमद्रघुनाथशिरोमणिकृत-दीधितिटीका-
महामहोपाध्याय-जगद्गुरु-श्रीमद्जगदीशतर्कालङ्कार-
कृत-दीधितिव्याख्या-

नवद्वीप-राष्ट्रियसंस्कृतमहाविद्यालयाध्यक्ष-न्यायशास्त्राध्यापक -
श्रीमद्यादवेन्द्रनाथराय न्यायतर्कतीर्थदेवशर्म-
विरचित तात्पर्यदीपिका व्याख्यासहितम्

भारतराष्ट्रसर्वकार-शिक्षामन्त्रकार्थानुकूल्येन मुद्रितम्
"With the Financial assistance from the Ministry
of Education, Government of India"

प्रथमं संस्करणम्

शकाब्दाः-१८९०

प्रकाशक :—
श्रीविश्वम्भरराय देवशर्मा
माधवपुरम् , पोः वालिघाइ
मेदिनीपुरम् , पश्चिमवङ्गम् ।

प्राप्तिस्थानम्
संस्कृत पुस्तक भाण्डार
३८, विधान सरणि, कलिकाता-६
राय साहित्य सदनम्
पोः वालिघाइ, मेदिनीपुर मण्डलम्



मूल्यम् रूप्यकद्वयम्

प्रथममुद्रणम् ११००—१९६८

मुद्राकर :—
कलिकाता ओरियेण्टाल प्रेस प्राइभेट लिमिटेड
९, पञ्चानन घोष लेन,
कलिकाता-९

# भूमिका

साम्प्रतं पाश्चात्यसभ्यताविषजर्जरितेऽधिकारमोहमहान्धकारप्रमत्ते कृत्याकृत्यविनिर्णय-विवेकरहिते शिष्टाचारविगर्हित-कोलाहलकलङ्किते विषमे काले निरन्तरमनादरणीय-संस्कृत-भाषासाहित्ये विशेषतो मतिमतामपि दुरवगाहे नव्यन्यायशास्त्रे विगतश्रद्धानामाधुनिकानामन्तिके तस्यैव नव्यन्यायशास्त्रस्य प्रशस्तिवाचनं नितरां खेदजनकम्। तथापि यावदनुवर्तिष्यते सृष्टिप्रवाहस्तावन्मनुष्याणां चिन्ताधाराऽव्याहतगत्या प्रवाहिणी स्थास्यति। यैषा चिन्ताधारा विशृङ्खलभावविवर्जिता प्रत्यगिन्द्रिया तत्त्वज्ञानोन्मुखीं शेमुषीमन्तर्दृष्टिसम्पन्नां विदधाति सैषा भारतवर्षस्य चिन्ता दार्शनिकचिन्तात्वेनाभ्युपगता दृश्यते। दार्शनिक-चिन्ताधारा शास्त्रानुशीलनेन सूक्ष्मात् सूक्ष्मतरा सूक्ष्मतमा च भवतीति लौकिकबहिर्दृष्टितः परावृत्यालौकिकान्तर्दृष्टिसम्पन्नान् करोति विवेकिनः। नव्यन्यायशास्त्रं शास्त्रान्तरापेक्षया सूक्ष्मतरां दृष्टिं विदधत् "प्रदीपः सर्वविद्यानामि"ति व्यपदिश्यते।

आर्यशासनकाले संस्कृतभाषैवासीद्राष्ट्रभाषा भारतराष्ट्रस्य। संस्कृतभाषासाहित्य-दर्शनश्रुत्यादीन्यधिगत्य जनाः शिक्षितपदवाच्या अभवन्। गतः स कालः।

खृष्टियपञ्चदशशताब्दीमध्यभागेऽपि दीर्घजीविनो वासुदेवसार्वभौमपादा आविर्भूय नवद्वीपधाम्नि न्यायशास्त्राध्ययनपीठस्थानत्वेन प्रसिद्धिं गताया मिथिलायाः श्रीमद्गङ्गेशोपाध्यायप्रणीतं तत्त्वचिन्तामणिनामधेयं नव्यन्यायशास्त्रं समग्रं सम्यक् समधीत्य समुत्तीर्य च शतशः शलाकावेधादिकौशलेन तास्ताः परीक्षाः सार्वभौम इत्युपाधिना समलङ्कृता ग्रन्थानयनासम्भवात् समग्रमेव तं चिन्तामणिग्रन्थं कण्ठे निधाय वाराणसीपथेन नवद्वीपे प्रत्यावर्तन्त। न्यायशास्त्राध्यापनायां निरताश्चासन् संस्थाप्य चतुष्पाठीम्। भारतीय-विभिन्न-प्रान्तेष्वपि प्रचरत्-तदध्यापनयशः समाकर्षदन्तेवासिनः। तदन्तेवासिषु काणभट्ट-श्रीरघुनाथा एवातीव तीक्ष्णधीसम्पन्ना आसन्। तेऽपि मिथिलां गत्वा परमगुरोः पक्षधरमिश्रस्य पक्षं सातयन्तः प्रतिभया विचारनैपुण्येन तत्रत्य प्रसिद्धान् नैयायिकान् पराजित्य 'शिरोमणि'-रित्युपाधिना विभूषिता "उपाधिलाभार्थमवश्यमेव गन्तव्या मिथिला विद्वद्भिरपी"ति कलङ्क-मोचनाय नवद्वीपधाम्नि तत्तत्परीत्या शलाकावेधादिप्रकारेण परीक्षाग्रहणमुपाधिदानं च प्रवर्तयामासुः। भारतप्रान्तादपि समायाता विद्यार्थिनोऽत्र विद्यामुपार्ज्य तत्तदुपाध

लब्धवन्तः। श्रीमच्छिरोमणिपादाः प्रतिभया देदीप्यमानाः पक्षधरेण साहित्य-व्याकरणादि-ज्ञानमधिकृत्य जिज्ञास्यमानाः प्रत्यवदन् ;—

तर्केषु कर्कशधियो वयमेव नान्ये काव्येषु कोमलधियो वयमेव नान्ये ।
तन्त्रेषु यन्त्रितधियो वयमेव नान्ये कृष्णेषु संयतधियो वयमेव नान्ये ॥

कवित्वं किञ्चिदौन्नत्यं चिन्तामणिमणीषिणः। निपीतकालकूटस्य हरस्येवाहिखेलनम् ॥

इत्यादि। प्रत्यावृत्य च मिथिलाया आचार्यवासुदेवसमीपे प्रणामं विधाय समवस्थिते रघुनाथे आचार्यपादा अपृच्छन् ;—

अयि दिवसमनैषीः पद्मिनीसद्मनि त्वं रजनिषु निरतोऽभूः कैरविण्यां रमण्याम् ।
कथय कथय भृङ्ग ! स्वच्छभावेन तावत् किमधिकसुखमाप्सीरत्र वा तत्र वेति ॥

शिरोमणयः प्रत्यवोचन्—

त्वं पीयूष दिवोऽपि भूषणमपि द्राक्षे परीक्षेत को
माधुर्यं तव विश्वतोऽपि विदितं साध्वी च माध्वीकता ।
किन्त्वेकन्त्वपरन्त्वरुन्तुदमहो ब्रूमो न चेत् कुप्यसे
यः कान्ताधरपल्लवे मधुरिमा नान्यत्र कुत्रापि सः ॥

दुःखिताः सार्वभौमपादा अवदन् ;—

यस्या जन्मान्यवंशे वसतिरपि सदा दूरदेशे पुरासीत्
सैषा भूत्वा वधूटी प्रकटितविनया वेश्ममध्ये प्रविश्य ।
आजन्मप्राणतुल्यान् गुरुजनजननी-सोदरानन्तरङ्गान्
दूरीकृत्य स्वगेहात् पतिमभिरमते धिक् गृहस्थाश्रमस्थान् ॥

ततश्च सर्वसमादृताः शिरोमणयः श्रीचिन्तामणेर्दीधितिटीकां प्रणीय विश्वे सुख्यातिं लब्धवन्तः। सतीष्वपि बह्वीषु टीकासु दीधितिग्रन्थस्य जगद्गुरुपदवीभाजः श्रीमज्जगदीशतर्कालङ्कार-कृता व्याख्यैवारञ्जयदादौ विदूषां मनांसि। ततश्च गादाधरीव्याख्या प्रवर्तिता सर्वेषां मणीषिणां चित्तान्यभिरमयति। आस्तां तावत्-प्रकृतमनुसरामः।

एवं संस्कृतभाषाया एतादृशे दुर्दिने एतेषामेव श्रीजगदीशतर्कालङ्कारपादानां हेत्वाभास-सामान्यनिरुक्तिदीधितिव्याख्यानसहितं ग्रन्थं दुष्प्राप्यं संस्कृतपरीक्षायां न्यायशास्त्रे पाठ्यत्वेन निर्दिष्टश्चेति विविच्य मदन्तेवासि-वरिष्ठेन नवद्वीपराष्ट्रियसंस्कृतमहाविद्यालयाध्यक्षेण न्यायशास्त्राध्यापकेन श्रीमता यादवेन्द्रनाथराय-न्यायतर्कतीर्थेन पूर्वाचार्यपरम्पराप्राप्तोपदेश-माकलय्य विरचितां सविस्तरं तात्पर्यदीपिकाख्यां जगदीशव्याख्यानव्याख्यां विलोकयता

मया मुदा सानन्दं विज्ञाप्यते यदधुना वह्वोः कालान्नैयायिकैरनुभूयमानः कश्चनाभावो दूरीभूतः। श्रीमानध्यवसायसहकारेण दीर्घकालं न्यायशास्त्रमधीत्य न्यायशास्त्रचर्चां च विधाय न्यायशास्त्रस्य ग्रन्थान्तरस्यापि टीकां प्रणीतवान्। उद्युक्तश्च तथैव ग्रन्थान्तराणामपि व्याख्याप्रणयने। अस्मिन्नर्थसङ्कटे काले दुर्जयजीविकार्जनग्राहग्रस्तस्यापि श्रीमतः समुद्योगः सुतरां प्रशंसनीयः।

निरामयश्चिरं जीवतादयं सुरसरस्वतीसेवकः। उत्तरोत्तरं च नानाग्रन्थप्रकाशादिकर्मभिः सुविमलयशोभाग् भूयादिति श्रीभगवच्चरणे संप्रार्थ्यत इति।

हुगलीमण्डलान्तर्गत-
भद्रकाली-
शान्तिनगरतः।

महामहोपाध्याय-महाकवि-
**श्रीकालीपदतर्काचार्य-भट्टाचार्यस्य**

## मुखबन्धः

गुरूंश्च पितरौ नत्वा जगदीशं नमामि तम् ।

यत्प्रसादाद् श्रुतिं प्राप्ता श्रीचिन्तामणिदीधितिः ॥

विदितमेतद् विपश्चिदपश्चिमानां समेषां यद् "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती । विद्या ह्येताश्चतस्रस्तु लोकसंस्थितिहेतवः ॥ प्रत्यक्षागमाभ्यामीक्षितस्यानु-ईक्षणमन्वीक्षा । तया प्रवर्तते इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्, नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति न्यायः निपूर्वादिधातोर्घञ्प्रत्ययेन न्यायपदसिद्धिः । तथाच न्यायो मीमांसा धर्मशास्त्राणीति श्रुतेः । मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्तितः । इत्यादिश्रौत-स्मार्त-प्रामाण्याद् "आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना । यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥ इति मानवीयधर्मशास्त्रप्रामाण्याच्च श्रुत्यादीनां तथा धर्मशास्त्रादिनिखिल-शास्त्राणां तत्त्वनिर्णये न्यायशास्त्रस्य शास्त्रान्तरापेक्षया नितरां समुपयोगित्वम् । उक्तञ्च भाष्यकारेण श्रीमता वात्स्यायनेन "प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥ मोक्षधर्मेऽपि-"तत्रोपनिषदं तात ! परिशेषं तु पार्थिव । मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥" उपनिषदर्थश्चान्वीक्षिक्यनुसारी ग्राह्यः । इमास्तु चतस्रो विद्या पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते । इति भाष्यकृतः । लोकसंस्थितौ न्यायशास्त्रस्य प्राधान्याच् चतुर्षु विद्याप्रस्थानेषु तस्यान्वीक्षिकीपदेन प्रथमं निर्देशः । अतएव रामायणेऽयोध्याकाण्डे जाबालिमुनिना भरतपक्षसमर्थकेन प्रथमतो वेदविरोधिनास्तिकतर्कविद्यामधिकृत्यैव भगवता श्रीरामचन्द्रेण सह शास्त्रार्थो विहितः । ततश्च श्रीरामचन्द्रेण वेदविरोधिनास्तिकतर्कविद्याया निन्दा कृता । न तु वादकथाप्रवर्तन-द्वारा शास्त्रार्थनिर्णायकस्य वेदमूलकस्य न्यायशास्त्रस्य । यच्च "यः पठेद् गौतमीं विद्यां शार्गालीं योनिमाप्नुयादिति वचनं तदमूलकमेव । समूलकत्वे स एष गौतमः "प्रमाण-प्रमेयादिषोडशपदार्थनिरूपकाद् वेदशास्त्रानुसारेण शास्त्रार्थविचारकारिणो महर्षे गौतमादन्यः कश्चिद् गौतमो गोतमो ( बुद्धो ) वा । महर्षिगौतमप्रणीतन्यायशास्त्रे कुत्रापि वेदविरोधिनां कुतर्कादीनामनवतारात् । यदाह भाष्यकारः—"आत्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेय-साधिगमः । हेयं तस्य निवर्तकं, हानमात्यन्तिकं तस्योपायोऽधिगन्तव्य इत्येतानि चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छतीति । न्यायशास्त्रार्थस्तु परार्थानुमानं प्रतिज्ञादिपञ्चवाक्यसमुदायो वा तत्प्रतिपादकं शास्त्रं न्यायशास्त्रमिति तस्य सर्वशास्त्रनिदानी-

भूत-सर्वज्ञपरमेश्वरो( प्रणीत )त्पन्नत्वमपि सुवलोपनिषदि "न्यायमीमांसा धर्मशास्त्राणीति प्रमाणीकृतमित्यपि परिदृश्यते ।

महर्षिगोतमप्रणीतं न्यायदर्शनं महर्षिकणादप्रणीतञ्च वैशेषिकदर्शनमुभे आन्वीक्षिकी-पदवाच्ये। सत्यपि बहुशो मतवैषम्ये पदार्थतत्त्वविज्ञानान्मोक्षप्रतिपादकत्वेन समतन्त्र-सिद्धान्तत्वान्मिश्रितभावेन दर्शनद्वयं समालोच्यतेऽध्याप्यते च । नव्यन्यायप्रवर्तकचिन्तामणि-कृद्गङ्गेशोपाध्यायपूर्ववर्तिनस्तावदुदयनाचार्यप्रमुखा अनेकेऽनधीतनव्यन्यायतन्त्रा विलक्षण-गवेषणापूर्णानपूर्वग्रन्थनिचयान् विरचितवन्तो देदीप्यन्ते । तेषामतुलनीयन्यायमतिसुषमा नाद्यापि मलिनीभूता । तेषां सर्वेषामेव प्रागुक्तमहर्षिद्वयप्रणीतान्वीक्षिकीशास्त्राभिज्ञतैव तादृशानुपमशास्त्रनिर्माणप्रयोजिका । नूतनसरणिमनुसृत्य प्रवर्तमानं नव्यन्यायशास्त्रं न केवलं शास्त्रान्तरज्ञानकौमुदीं विकाशयति—अपि च सर्वजनाभीप्सितां मुक्तिपदवीमपि प्रदर्शनोपयोगिनीं शेमुषीं समुद्भासयतीति विचित्रः खल्वस्य महिमा । महर्षिद्वयप्रणीते इमे दर्शनशास्त्रे वेदमूलकत्वेन 'निःश्रेयसं' 'निःश्रेयसाधिगम' इत्याद्युक्तिविशेषेण मोक्षप्रयोजक-प्रयोजनवत्त्वेन तर्कविद्यामात्रस्य कोषकारसम्मतान्वीक्षिकीपदवाच्यत्वेऽपि न नास्तिकादि-प्रणीतवेदविरोधिकुतर्कविजृम्भितग्रन्थवदुपेक्षणीये । अतएव प्राचीनन्यायशास्त्रस्य नवीन-न्यायशास्त्रस्य च प्रेक्षावत् प्रवृत्त्यङ्गतया शिष्टैर्विशिष्टैः सुतरां समादरो दरीदृश्यते ।

नव्यन्यायशास्त्रप्रवर्तक-श्रीमद्गङ्गेशोपाध्यायविरचिततत्त्वचिन्तामणिग्रन्थरत्नस्यातुलनीया दीधितिव्याख्या प्रणीता सर्वतन्त्रस्वतन्त्रेण सतां शिरोमणिना वङ्गविभूषणेन श्रीमता रघुनाथशिरोमणिना । यः खलु मन्दाकिनीप्रवाहवदाप्लावयत् विश्वं नव्यन्यायप्रवाहसन्त-तिभिः । तामेव दीधितिव्याख्यामवलम्ब्य व्याख्यानसहस्रधाराः प्रवहन्ति स्म दीर्घकालम् । तेषु महामहोपाध्याय-जगद्गुरु - श्रीमज्जगदीशतर्कालङ्कार-महामहोपाध्यायोऽलब्धोपाधिकः श्रीमद्गदाधरभट्टाचार्यमहात्मनोर्दीधितिव्याख्यानं विश्वेषु समादृतं परिलक्ष्यते ।

पण्डितप्रकाण्डयोरेतयोः काश्यपगोत्रीययजुर्वेदशाखाध्यायिपाश्चात्यवैदिकमैथिल-नैयायिक-विद्वद्वर-श्रीमद्यादवचन्द्रविद्यावागीशतनुजोऽपि श्रीमान्जगदीशः शैशव एव पितृविहीनो-ऽग्रजस्य षष्ठीदासस्य शासनमुल्लङ्घ्य प्रायोऽनाप्ताक्षरपरिचयोऽनाविष्टोऽष्टादशवर्षं यावदभ्रमद-सन्मार्गेण । ततश्च काचिद् घटनापरम्परा समबोधयदेनमिति किंवदन्ती ।

साचेत्थं कदाचित् पक्षिशावकाहरणमानसो महान्तं तालवृक्षमारुह्य पक्षिशावकानादातुं प्रसारितकरो विषमां फणां विस्तीर्य दंशनोर्थं कञ्चिद् विषधरं विलोक्य प्रत्युत्पन्नमतिरगतिकोऽसौ जागदीशः सहसा दृढमुष्ट्या तद्विषधरवदनं धृत्वा तालवृन्तस्य क्रकचाकारप्रान्तभागेन खण्डितं

वदनं दूरे न्यक्षिपत्। ततश्च क्रुद्धस्य सर्पस्य पश्चार्धेन प्राक्संवेष्टितहस्तोऽसौ पश्चार्धमपि तथैव खण्डशो विधाय भूमावपातयत्। अवतरति च तस्मिन् तस्माद् वृक्षात् समीपवर्तिना केनचित् सन्न्यासिना तस्य तादृशं प्रत्युत्पन्नमतित्वं साहसं तीक्ष्णां बुद्धिं च समवलोक्य समीपमाहूय च जगदीशं सदुपदेशदानादिना प्रत्यबोधयत्। प्रतिबुद्धश्चासौ ततः प्रभृति निद्रामपि दूरीकृत्य द्युनिशं महता प्रयत्नेनाध्यवसायेन च साहित्य-व्याकरणादिकं तत्तदुपाध्यायेभ्यः सम्यगधिगत्य नायशास्त्रमपि कस्यचित् सार्वभौमोपाधिकस्य गुरोः सकाशादधीतवान्। उक्तं च तेनैव न्यायादर्श-मङ्गलाचरणे—

यन्मादृशैः समुपदिष्टमजुष्टमन्यैः श्रीसार्वभौमगुरुणा करुणामयेन।
सिद्धान्तसारमिदमादरतस्तदद्य विद्यार्थिनां गुणकृते प्रकृते वदामः॥

एवञ्च "आदौ जगाजगुः पश्चाद् जगाजगोरनन्तरम्।
अधुना ज्ञानसम्पत्त्या जगदीशायते जगा॥"

इति प्रचलितप्रवादोऽपि सार्थको जातः।

लब्धतर्कालङ्कारोपाधिकोऽपि दारिद्र्याच् चतुष्पाठीं संस्थाप्याध्यापयितुं नाशक्नोत्। अनुमानदीधितिटिप्पन्यां—

"प्राच्यैरनुचितविविधक्षोदैः कलुषीकृतोऽप्यधुना।
दीधितियुतमणिरेष श्रीजगदीशप्रकाशितः स्फुरतु॥

इति स्वलिखितकारिकातो ज्ञायते तस्य दीधितिव्याख्यानं सुसङ्गतं समादृतञ्चासीदिति-विद्यार्थिनस्तत्र समाकृष्टाः। दारिद्र्यमोचनाय सम्पादितास्तेन शूद्रा शिष्याः। तेषां प्रदत्तैर्वित्तैर्जीविकामर्जयन् निश्चिन्तमध्यापयामास विद्यार्थिनः, प्रणीतवांश्च शब्दशक्तिप्रकाशिका-तर्कामृतादि-मूलग्रन्थान् प्रत्यक्षानुमानोपमानशब्दमयूख-प्रत्यक्षानुमानलीलावती-दीधितिटीका-द्रव्यसूक्तिगुणसूक्तिन्यायादर्शमुक्तिविचारप्रभृतिटीकाग्रन्थान्।

आविर्भावकालश्चास्य पण्डितराजस्याद्यापि सन्देहदोलामध्यास्ते। केचन १५४०-१५५० खृष्टियाब्दमध्ये जातोऽयं जातक इति प्राहुः। केचिच्च (नवद्वीपमहिमग्रन्थे—(१६४ पृष्ठे)

शाके रन्ध्राद्रिबाणक्षितिपरिगणिते माघमासे नवम्यां
पक्षे चैवावलक्षे ग्रहपतिदिवसे जीवयुग्युग्मलग्ने।
न्यायालङ्कारधीरो निजगुरुरचितं पुस्तमेतत् समस्तं
स्वीयं स्वीयाङ्गजस्थोऽप्यलिखदनलसोऽध्यापनार्थं सुखेन॥

इति श्लोकरचनाकाले ( १५७९ शकाब्दे-१६५७ खृष्टियाब्दे ) तस्यावस्थितिरनुमीयते। एवञ्च इमे महात्मानः शतायुरासन् न वेति गवेषणाविषयः।

अधुनाप्येतेषां वंशधरो नवद्वीपे वर्तते। तद्वंशीय-पण्डितप्रवरश्रीयतीन्द्रनाथतर्कतीर्थ-महोदयनिवासे संरक्षितस्य "मुक्तिविचार" ग्रन्थस्यान्ते—"इति गौड़ान्तर्गत-नवद्वीपनिवासि-वैदिकतार्किकचूड़ामणि-श्रीयुक्तजगद्गुरु जगदीशतर्कालङ्कार-भट्टाचार्य-महामहोपाध्यायविरचितो मतभेदेन मुक्तिविचारः समाप्तः।" इति लिखनस्वरसादनुमीयते इमे तर्कालङ्कारपादा अनन्य-लभ्यं सविशेषबहुमानज्ञापकं "जगद्गुरु"रित्युपाधिं लब्धवन्तः। 'जगदीशस्य सर्वस्वं शब्द-शक्तिप्रकाशिके" त्येतेषां वैदुष्यमतुलनीयमप्रतर्क्यं चासीदिति संक्षेपः।

दीधितिसहिताया जागदीशीव्याख्याया व्याख्यानमत्र ग्रन्थे सन्निवेशितम्। तत्र हेत्वा-भास सामान्यनिरुक्तिग्रन्थे हेत्वाभासस्य सामान्यं लक्षणं कृतमिति सामान्यनिरुक्तिनाम्ना व्यपदेशः। अस्यापि ज्ञानस्य परम्परया मुक्तिप्रयोजकता विद्यते। तथाहि तापत्रयपराहता विवेकिनस्तापत्रयनिवृत्तिनिदानमनुसंदधाना "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति श्रुतिमनुसृत्यात्मतत्त्वसाक्षात्कारमेव तदुपायमाकलयाम्बभुवुः। तत्र 'श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः॥ इति श्रुतिवाक्येभ्यः श्रवणानन्तरं मननाख्यामुपासनां चिकीर्षवो "मननं च बहुभिर्हेतुभिरनु-मानमितिनिर्णयमाकलय्य "क्षितिः सकर्तृका कार्यत्वाद् घटवदिति कार्यादिलिङ्गकानुमानं प्रयुञ्जते। सकर्तृकत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्।" उपादानं च न्यायमते परमाणुरेव। तद्गोचरापरोक्षज्ञानं नास्मदादीनां तेनेश्वरसिद्धिरित्यन्यत्र विस्तरः। तत्रानुमाने सद्धेतोरिवासद्धेतोरपि ज्ञानमपेक्षितमिति तत्त्वनिर्णयविजयप्रयोजकत्वाद् हेत्वाभासा निरूप्यन्ते इत्यादिग्रन्थः। तत्त्वनिर्णयेऽप्येवं सद्धेतोरिव हेत्वाभासस्याप्युपयोग इत्येककार्य-प्रयोजकत्वादुभयोः।

तथाहि पर्वतो वह्निमानिदं ज्ञानं प्रमा व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्यत्वात्, अत्र पर्वतो वह्निमानितिज्ञानधर्मिकप्रमात्वज्ञानमेव तत्त्वनिर्णयः, स च प्रकृतेऽनुमित्यात्मकः अनुमितिं प्रति पक्षधर्मिकहेतुज्ञानस्य कारणतया कारणतावच्छेदकानाञ्च जनकजनकतावच्छेदकसाधारण-प्रयोजकत्वसत्त्वेन विषयतया परम्परापरिप्राप्तकारणतावच्छेदकीभूतव्याप्तिपक्षधर्मताविशिष्ट-हेतोरपि प्रमात्वग्रहं प्रति प्रयोजकत्वमिति? अथ कथं व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्य-त्वेन हेतुना ज्ञाने प्रमात्वनिश्चयः, तादृशस्य हेतोः "उत्पत्तिकालीनघटो गन्धवान् पृथिवीत्वादि-त्यायसङ्कीर्णवाधस्थलान्तर्भावेन व्यभिचारादिति चेत् तत्र च परमगुरूणां सार्वभौमपादानां समाधानं" प्रमात्वं न स्वरूपसम्बन्धेन साध्यम् अपि तु स्वाश्रयत्व-स्वाश्रयपरामर्शजन्यत्वै-तदन्यतरसम्बन्धेन। तथा च यत्र व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्याऽनुमितिः प्रमा तत्र स्वाश्रयत्वसम्बन्धेन, यत्र च व्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्या अनुमितिप्रमा तत्र स्वाश्रय-

परामर्शजन्यत्वसम्बन्धेन प्रमात्वं साध्यम्। अतः प्रकृते पक्षतावच्छेदकधर्मावच्छिन्ने साध्यवत्त्वविरहात् तदवगाहित्वेन ज्ञानस्याप्रमात्वे परामर्शस्य प्रमात्वेन तज्जन्यत्वस्यास्य न व्यभिचार"इति। दुष्टहेतोश्च तत्त्वनिर्णयं प्रत्युपयोगित्वं यथा इयमनुमितिः प्रमा दुष्टहेतुग्रह-जन्यानुमितिविरोधित्वादिति प्रमात्वनिर्णयहेतुभूततथाविधविरोधत्वज्ञानांशे परम्परया विशेषणभूतदुष्टहेतोः कारणतावच्छेदकत्वरूपं प्रयोजकत्वम्। एवञ्च सद्धेतौ दुष्टहेतौ च तत्त्व-निर्णयरूपैककार्यप्रयोजकतासत्त्वेन सद्धेतुनिरूपिता सङ्गतिर्दुष्टहेतावपीति प्रतिपत्तव्यम्।

अनुमितिप्रतिबन्धकत्वं हेत्वाभासत्वम्। प्रतिबन्धकत्वं च कारणीभूताभावप्रतियोगित्व-मित्यादि टीकायां द्रष्टव्यम्। अत्र प्रतिबध्यप्रतिबन्धकभावश्च यथा—तद्वत्ताबुद्धिं प्रति तद-भाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वम्। तत्र प्रतिबध्यतावच्छेदक-कोटौ लौकिकसन्निकर्षाजन्यत्वं दोषविशेषाजन्यत्वं च निवेशनीयम्। प्रतिबध्यतावच्छेदकं तु संशयनिश्चसाधारणतद्वत्ता ज्ञानत्वमिति ज्ञानत्वेन तत्र प्रतिबध्यताकुक्षौ निवेशः। प्रति-बन्धकतावच्छेदककुक्षौ तु अनाहार्योऽप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वं निवेश्यम्! (कपि-संयोगी एतद्वृक्षत्वादित्यत्र कपिसंयोगाभाववद्वृक्षेऽतिप्रसङ्गवारणायाऽव्याप्यवृत्तिविषयताशून्यत्वं भ्रमभिन्नत्वमपि निवेश्यम्।) तथा च लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्धर्मावच्छिन्न-विशेष्यतानिरूपित-तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नप्रकारताप्रतियोगिताकाभाववत्ताप्रकारकाऽ-नाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयस्य तादृशाभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वं वाच्यम्। प्रतिबध्यताप्रतिबन्धकतावच्छेदकसम्बन्धश्च समवायः। साधारणतः पञ्चविधानां दोषाणां लक्षणमुदाहरणञ्च टीकाया अन्तिमे भागे निवेशिते। सामानाधिकरण्येनानुमितिं प्रति अवच्छेदावच्छेदेन बाधनिश्चयस्य अवच्छेदावच्छेदेनाऽनुमितिं प्रति तु अवच्छेदावच्छेदेन सामानाधिकरण्येन च बाधनिश्चयस्य प्रतिबन्धकत्वम्।

अत्र वदन्तिकल्पीयव्याख्यानभागात् प्रभृति द्वित्राण्यादर्शपत्राणि नष्टानीतिग्रन्थसूचना-न्तरं विहाय गत्यन्तराभावात् किञ्चिदत्रविविच्यते तत्र "न चैवं द्रव्यत्वावच्छेन धूम-हेतुना वह्नेः साध्यतास्थले भागसिद्ध्यंशतोबाधयोरव्याप्ति"रित्यादिग्रन्थे—भागासिद्धिस्तु पक्षतावच्छेदक-सामानाधिकरण्येन हेतोरभावः। अत्रापि द्रव्यत्वसामानाधिकरण्येन हेतोर-भावोऽस्त्येव। न हि सर्वं द्रव्यं वह्निमत्। वह्न्यभाववति जलादौ द्रव्ये धूमाभावस्य सत्त्वात्। एवमंशेतो बाधोऽपि वह्न्यभाववति द्रव्ये साध्यस्य विद्यमानत्वात्। अतएव तद्धर्मावलीढ-स्यैवेति ग्रन्थः संगच्छते। अत्रावलीढत्वं न तद्धर्मावच्छिन्नत्वम् अपि तु यथाकथञ्चिदाश्रयत्व-मात्रम्। अन्यथा द्रव्यात्वावच्छेदेन वह्नेरवच्छेदावच्छेदेनासत्त्वात् भागासिद्ध्यंशतो बाधयोरव्याप्तिरित्यादि ग्रन्थासङ्गतेः।

दीधितौ—अनुमितिप्रतिबन्धकपदं च प्रतिबन्धकाधीनानुमित्यनुत्पादपरमित्यादिक-मूहनीयम् ।

तदिमं जागदीशीटीकासहितं व्याख्यानग्रन्थं दुष्प्राप्यं संस्कृतपरीक्षायां नव्यन्याय-शास्त्रे पाठ्यत्वेन निर्दिष्टं विविच्यास्मदुपाध्यायप्रवरैराचार्यपादैर्महाकवि-महामहोपाध्याय-श्रीयुक्तकालीपदतर्काचार्यभट्टाचार्यमहोदयैः पूर्वाचार्यपरम्पराप्राप्तमुपदेशमाकलय्यास्य ग्रन्थस्य व्याख्यां विरचयितुमुपदिष्टस्य ममास्मिन् कर्मणि प्रवृत्तिः समुत्पन्ना । शिवकल्पस्य गुरोरादेश एवात्र व्याख्यानविरचने निदानम् । ततश्च कोच्विहारराष्ट्रियसंस्कृतमहाविद्यालयेऽध्यक्ष-रूपेण कलिकाताराष्ट्रियसंस्कृतमहाविद्यालयान्निर्वासितस्तत्रैव महता यत्नेन सज्जीकृत एष ग्रन्थः । अर्थाभावाद् भग्नोत्साहश्चाहं प्रोत्साहितस्तदानीन्तन-कलिकाता-राष्ट्रियमहा-विद्यालयसुयोग्याध्यक्षप्रवरैर्नव्यन्यायपक्षपातिभिर्विविधसद्गुणालङ्कृतैर्विद्वद्वरेण्यैः सम्माननीयैः डक्टर श्रीमद् गौरीनाथशास्त्रि एम्. ए, पि. आर. एस् , डि. लिट् महोदयैः । तदद्यत्वे वाराणसेय संस्कृतविश्वविद्यालयोपाचार्यपदमलङ्कृतवद्भ्यस्तेभ्यः सादरं कृतज्ञता विज्ञाप्यते । आचार्यप्रवरेभ्यो गुरुभ्यो वा किं देयमस्तीति तेभ्यः केवलं सभक्तिभूमिष्ठप्रणतिर्निवेद्यते । आदितोऽन्तपर्यन्तग्रन्थो यदि तैरेवाचार्यपादैर्न परिदृष्टः स्यात् तदा प्रथमप्रवृत्तस्य मे न जायेत समाश्वासः ।

मुद्रणव्यापारे भारतीयसंस्कृतशिक्षामन्त्रणालयादर्थानुकूल्यं न लभ्येत तदाप्येतत् कार्यमसम्पूर्णमेव स्यादिति तेभ्यः शिक्षामन्त्रकेभ्यो भूयोभूयः साभिनन्दनं विज्ञाप्यते कृतज्ञता प्रदीयन्ते च साधुवादाः ।

परिशेषे वक्तव्यमेतद् यदन्मदीयसतीर्थप्रवरस्य कलिकाताराष्ट्रियसंस्कृत-महाविद्यालय-ग्रन्थप्रकाशनविभागीयसम्पादकस्य काव्यव्याकरणतर्कतीर्थोपाधिकस्य श्रीमतो ननीगोपाल-सिद्धान्तवागीशस्यानुजतुलस्यादर्शमुद्राङ्कन (proof) संशोधन-सज्जीकरणादिसमपेक्षितकृत्यजात-निर्वाहादिप्रकारेण सविशेषं साहाय्यं विना मुद्रणादिग्रन्थसम्पादनव्यापारः कलिकाता-नगर्या दूरवर्तिनो मेऽसम्भव एव स्यादिति तस्मै स्नेहाशीर्वादविज्ञापनपूर्वकं तस्य श्रीमतो निरामयसुदीर्घकर्मजीवनं परमेश्वरसविधे प्रार्थ्यते ।

प्रथमप्रवृत्तौ त्रुटिसम्भावनाऽवश्यं वर्तेत । तच्च क्षमापरैर्विद्वद्भिः कृपया क्षन्तव्यमिति ।

नदीया-मण्डलान्तर्गत नवद्वीपधामस्थ-राष्ट्रिय-
संस्कृत-महाविद्यालयतः ।
१८६० शकाब्दीय-रासपूर्णिमायाम्

विदुषामनुचर—
श्रीयादवेन्द्रनाथरायदेवशर्मणः
( न्यायतर्कतीर्थस्य )

# सामान्यनिरुक्तिप्रकरणम्

[ चिन्तामणि-दीधिति-जागदीशी-तात्पर्यदीपिका-
व्याख्यासमेतम् ]

श्रीमद्गङ्गेशोपाध्यायकृत—

# तत्त्वचिन्तामणौ

## सामान्यनिरुक्तिप्रकरणम् ।

### रघुनाथकृतदीधितिव्याख्याया जगदीशटीकासहितम्, तात्पर्यदीपिकोपेतम् ।

—:o:—

तत्त्वचिन्तामणिः

**अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वान्निरूप्यन्ते ।**

तात्पर्यदीपिका

गुरून् गणपतिं नत्वा सर्वं कृष्णां सरस्वतीम् ।
व्याख्या सामान्यनिरुक्तेर्जागदीश्या वितन्यते ॥१॥
कार्यं यद्व्यतिरेकतो भवति नो संजायते चान्वयात्
प्राज्ञाः कारणमाहुरीश्वरमतिं जन्यस्य सर्वस्य तत् ।
क्षित्यादौ कृतिसाध्यजन्यनिवहे यत्त्वादिमं कारणं
सर्वं कारणकारणं त्रिजगतामिष्टार्थदं नौमि तम् ॥२॥
यद्धेतुर्विधिबोधनेऽक्षमतयैवाभासते हेतुव-
द्धेत्वाभासममुं वदन्ति सुधियो वादादिभिर्निर्णये ।
सद्धेतुश्च यथा स्वसाध्यनियमेऽसद्धेतुबोधस्तथा
दोषोद्भावनतः क्षमो विभुपदे सम्बन्धसंसाधने ॥३॥
गुर्वोः श्रीयामिनीकान्त-श्रीकालीपदपादयोः
मूर्ध्नि धूलिकणान्न्यस्य शिष्यैरेतद्विविच्यते ॥४॥
दोषनिर्वचने दोषाः सम्भवन्ति पदे पदे ।
क्षन्तव्यास्ते तु दोषज्ञैर्न्यायतत्त्वबुभुत्सुभिः ॥५॥
आचार्यक्रमसंप्राप्ता व्याख्या तात्पर्यदीपिका ।
शिष्यबोधाय संगृह्य यादवेन्द्रेण तन्यते ॥६॥

अथ तत्रभवान् महामनीषी श्रीमद्गङ्गेशोपाध्यायो मननाख्योपासनाभेदभिन्नानुमिति-प्रमितिं प्रसाध्य तदङ्गतया न्यायं तदवयवांश्च निरूप्य प्रसङ्गैककार्यत्वसङ्गतिभ्यां शिष्यावधानाय हेत्वाभासनिरूपणं प्रतिजानीते अथेत्यादि।

अत्राथशब्दोऽन्यार्थमुपनीयमानोदकुम्भदर्शनवदानन्तर्यवाचकोऽपि स्वप्रयोगमात्रेण मङ्गलार्थ-मपि सूचयति। न च ग्रन्थादावेव सम्भावितविघ्नविनाशाय मङ्गलाचरणसमुदाचार इति वाच्यम्, "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते" इत्यादिश्रुते-र्ग्रन्थमध्यभागेऽपि तदाचरणदर्शनाद् विशेषतोऽतिगहनस्य हेत्वाभासनिरूपणस्य कृच्छ्रसाध्यतया तन्निरूपणप्रारम्भे सम्भावितविघ्नाशङ्कया तदाचरणस्य न्याय्यत्वाच्च।

अथशब्दस्यानन्तर्यमर्थः। तच्च ध्वंसाधिकरणकालवृत्तित्वरूपम्। सद्धेतुनिरूपणानन्तरं न्यायतदवयवनिरूपणानन्तरं वेत्यानन्तर्यार्थः। "अथ हेत्वाभासास्तत्त्वनिर्णयविजयप्रयोजकत्वा-न्निरूप्यन्ते" इति मूलमेव प्रतिज्ञा। सा च स्वाव्यवहितोत्तरकालकर्तव्यत्वप्रकारकबोधानुकूल-व्यापारः। तत्र निरूप्यन्ते इत्यत्र वर्तमानसामीप्यार्थकलट्प्रत्ययस्य वर्तमानकालाव्यवहितो-त्तरकालीनत्वमर्थः, तस्य च निरूपणपदार्थेऽन्वयः। "तत्त्वनिर्णयविजयप्रयोजकत्वादि"त्यत्र तज्ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः। "निरूप्यन्ते" इत्यत्र कर्मवाच्यविहितलट्प्रत्ययस्य विषयत्वरूपं कर्मत्वमर्थः। शिष्यसमवेतज्ञानानुकूलव्यापारो निपूर्व-रूपधात्वर्थः। व्यापारस्य निर्विषयकत्वेऽपि शिष्यसमवेतज्ञानविषयतापन्नेषु हेत्वाभासेषु याचितमण्डनन्यायेन निरूपण-घटकशिष्यसमवेतज्ञानीयविषयतामादाय तत्र तदनुकूलव्यापारस्यापि निरूपितत्वसम्बन्धेनान्वयो बोध्यः। मयेतिकर्तृपदमूह्यम्, तत्र तृतीयार्थः कृतिः, तथाच मत्समवेतवर्तमानकालोत्तरकाल-वृत्तिकृतिप्रयोज्य--सद्धेतुनिरूपणानन्तरकालीनतत्त्वनिर्णयविजयप्रयोजकत्वज्ञानजन्यजिज्ञासाधीन-शिष्यसमवेतबोधानुकूलव्यापारविषयतावन्तो हेत्वाभासा इति समुदितशाब्दबोधः।

शिष्यो हि द्विविधः तत्त्वबुभुत्सुर्विजिगीषुश्च। तयोरुभयोरेव प्रयोजनं प्रदर्शयन्नाह—**तत्त्वनिर्णयविजयप्रयोजकत्वादिति**। एतेन शास्त्रस्य सम्बन्धप्रयोजने अपि प्रदर्शिते। न ह्यविदितसम्बन्धप्रयोजनः कोऽपि शास्त्रे प्रवर्तते इति भावः। उक्तञ्च—"ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते। ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः"॥ इति।

तत्त्वनिर्णयविजयप्रयोजकत्वादिति,—स्वमतव्यवस्थापनरूपे स्वार्थे, तत्त्वबुभुत्सुकथारूपे च वादे तत्त्वनिर्णयः। अवास्तवकोटिनिश्चायकहेतौ दुष्टत्वज्ञाने वास्तवकोटिनिश्चयो भवतीति हेत्वाभासस्यापि तत्त्वनिर्णयप्रयोजकत्वमिति भावः। वास्तवकोटिकनिश्चयपूर्वकपरमतनिराकरणं जल्पः। परमतनिराकरणमात्रं वितण्डा।

तथाचोक्तम्—"स्वपक्षस्थापनाहीना विजिगीषोः कथा तु या ।
सा वितण्डा समाख्याता वादिनिग्रहकारिणी" ॥ इति ।

तदेतयोरुद्भावनद्वारा परोक्तहेतौ दुष्टत्वोद्भावने परस्य निग्रहाद् दोषस्य विजयप्रयोजकत्वमिति भावः । केषाञ्चिदन्तेवासिनां के हेत्वाभासा इति जिज्ञासया, केषाञ्चिच्च के तत्त्वनिर्णयप्रयोजका इति जिज्ञासया हेत्वाभासनिरूपणाद्धेत्वाभासत्वरूपप्रसङ्गस्य तत्त्वनिर्णयरूपैककार्यकारित्व-रूपैककार्यानुकूलत्वस्य चानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानविषयत्वादत्र मूले एव सङ्गतिः प्रदर्शितेति विभावनीयम् ।

## श्रीमद्रघुनाथशिरोमणिकृता

## दीधितिः

**एतावता प्रबन्धेन सपरिकरं हेतुं निरूप्य तत्-प्रसङ्गात्तत्त्वनिर्णयादिरूपतत्कार्यकारित्वाच्च तदाभासनिरूपणं प्रतिजानीते 'अथे'ति ।**

### श्रीमज्जगदीशतर्कालङ्कारविरचिता दीधितेर्व्याख्या

### जागदीशी

**परिकरः सहकारी । स च व्याप्तिपक्षधर्मत्वादिः । तत्प्रसङ्गादिति ।**

#### तात्पर्यदीपिका

**एतावता प्रबन्धेन** अवयवान्तेन ग्रन्थेनेत्यर्थः । अत्राभेदो विभक्त्यर्थः । तथा-चैतावतेति तृतीयान्तस्याभेदसम्बन्धेन प्रबन्धे, प्रबन्धेनेति तृतीयान्तस्य निरूप्येत्यत्र धात्वर्थ-निरूपणेऽन्वयः । न च क्रियाविशेषणे द्वितीयेत्यनुशासनभङ्गप्रसङ्ग इति वाच्यम् , नामधेयस्य क्रियाविशेषणे तृतीयेत्यनुशासनात् क्रियाविशेषणस्य द्वितीयान्तस्य तृतीयान्तस्य वा सर्वत्राभेदो विभक्तेरर्थः, द्वितीयार्थस्याभेदस्य सम्बन्धविधया, तृतीयार्थस्याभेदस्य प्रकारविधया भानमात्रं विशेषः । केचित्तु अजहल्लिङ्गस्य क्रियाविशेषणत्वे तद्वाचकपदात् तृतीया जहल्लिङ्गस्य क्रियाविशेषणत्वे तद्वाचकपदाद्द्वितीयेत्यनुशासनार्थः, अन्यथा प्रत्यक्षं जानातीति प्रयोगापत्तेरित्याहुः । अन्ये तु यत्र भेदसम्बन्धेन धात्वर्थेऽन्वयस्तत्रैव द्वितीया, यत्राभेदस्यापि प्रकारतया धात्वर्थे भानं तत्र तृतीयेत्याहुः ।

**सपरिकरं हेतुमित्यत्र** द्वितीयार्थो विषयता। अत्र सपरिकरहेतुमित्यनुक्त्वा सपरिकरं हेतुमिति व्यासेन लिखनं तदाभासनिरूपणमित्यत्र तत्पदेन केवलहेतोः परामर्शकत्व-सम्पादनाय, अन्यथा समस्तपदकदेशपरामर्शकत्वेनैकदेशान्वयापत्तेः। समस्तपदपरामर्शकत्वे च सपरिकरहेतोराभासत्वासम्भवादसङ्गतिः प्रसज्येतेति तात्पर्यम्।

निरूप्येत्यत्र यप्प्रत्ययस्यानन्तर्यमर्थः। तत्प्रसङ्गादित्यत्र तत्त्वनिर्णयरूपतत्कार्य-कारित्वादित्यत्र च स्वज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः। निरूपणमित्यत्र द्वितीयार्थो विषयता। प्रतिजानीते इत्यत्र प्रतिपूर्व-ज्ञाधातोरुत्तरकालकर्तव्यत्वप्रकारकबोधानुकूलव्यापार-रूपोऽर्थः। तथा चावयवान्तग्रन्थाभिन्नसपरिकरहेतुविषयकनिरूपणानन्तरमिति निरूप्यान्त-शाब्दबोधः। मूलोक्तस्याथशब्दस्य निरूप्येत्यनन्तमर्थमभिधाय सामञ्जस्यकरणात् मूलवाक्यनिष्ठ-तदकथनज्ञानज्ञाप्यतदज्ञानवत्पुरुषोचरितत्वरूप-न्यूनतापरिहारसामर्थ्यं शिरोमणेः।

**परिकरः सहकारी। स च व्याप्तिपक्षधर्मत्वादिरिति।**—यो यन्निरूपणानन्तरं निरूपणीयः स तन्निरूपितसङ्गतिमानितिनियमात् निरूपणीयतावच्छेदकावच्छेदेन सङ्गते-रावश्यकत्वे उत्पत्तिक्षणावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्यादौ हेतौ व्याप्तिपक्षधर्मत्व-सत्त्वात् तस्योक्तक्रमेण व्याप्तिपक्षधर्मताविरहात्मकसङ्गतिविरहेण तत्स्मरणानुपपत्तिरुक्त-नियमभङ्गप्रसङ्गश्चातो व्याप्तिपक्षधर्मतादिरित्यत्रादिपदेनाबाधितत्वादि विवक्षितम्। तथा च निरुक्तहेतोर्व्याप्तिपक्षधर्मत्वसत्त्वेऽपि अबाधितत्वाभावरूपसङ्गतेस्तत्रापि सत्त्वान्नोक्तदोषद्वया-वकाशः। परिकरो व्याप्तिपक्षधर्मते इत्यर्थवादिनान्तु निरूप्यतावच्छेदकावच्छेदेन सङ्गति-मत्त्वस्याप्रयोजकत्वात् तत्सामानाधिकरण्येन सङ्गतिसत्त्वेऽपि निरूपणोपपत्तिरिति भावः। अवयवान्तग्रन्थाभिन्नसपरिकरहेतुविषयकनिरूपणानन्तरं तत्प्रसङ्गज्ञानजन्यजिज्ञासाधीनहेत्वा-भासनिरूपणविषयकोत्तरकालकर्तव्यत्वप्रकारकबोधानुकूलव्यापाराश्रयो मूलकार इति प्रतिजानीते इत्यन्तशाब्दबोधः। न च उत्पत्तिक्षणावच्छिन्नघट इत्यादिप्रागुक्तस्थले पृथिवीत्वस्य गन्धव्यभि-चारित्वमेवेति आदिपदमनर्थकमिति शङ्क्यम्, **जगदीशमते** प्रतियोगिव्यधिकरणसाध्याभाव-घटितव्याप्तेरेवानुमित्यौपयिकतया तादृशाभावघटितव्यभिचारज्ञानस्यैव निरुक्तव्याप्तिधी-विरोधितया पृथिवीत्वे तादृशव्यभिचारासम्भवादिति। **गदाधरमते** निरुक्तहेतोरपि व्यभिचारित्वं सम्भवति। यद्देशकालावच्छेदेन साध्यसिद्धेरुद्देश्यत्वं तद्देशकालावच्छेदेन साधनं तद्देशकालावच्छेदेन साध्यमिति देशकालघटितव्याप्तेरेवानुमितिप्रयोजकत्वेन सत्प्रतिपक्षेऽ-भिहितत्वादुत्पत्तिकालावच्छेदेन तादृशव्याप्तिविरहात्मकसङ्गतेस्तत्र सत्त्वान्नोक्तदोष इति मतद्वयेऽप्यवच्छेदकावच्छेदेन सङ्गतिरिति॥

## जागदीशी

**तेन हेतुना विरोधादिसम्बन्धेन स्मारितस्योपेक्षानर्हत्वादित्यर्थः। तत्त्व-निर्णयादीत्यादिना विजयादेः परिग्रहः। तत्कार्येति—सद्धेतुत्वव्यवस्थयेव प्रतिवादिहेतोराभासत्वव्यवस्थापनयापि तत्त्वनिर्णयाद्युत्पत्तेस्तथा चैककार्य-कारित्वमपि सङ्गतिः सम्भवतीति भावः।**

### तात्पर्यदीपिका

तस्य प्रसङ्गः—तत्प्रसङ्गः, तस्मात्। तत्पदं सपरिकरहेतुपरम्, निरूपितत्वं षष्ठ्यर्थः; ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः, तस्य निरूपणेऽन्वयः।

**तेन हेतुना विरोधादिसम्बन्धेन स्मारितस्योपेक्षानर्हत्वादित्यादि।**—एक-सम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतया सद्धेतुज्ञानं स्ववृत्तिव्याप्तिपक्षधर्मत्वाभाववत्त्वसम्बन्धेन सद्धेतुसम्बन्धीभूतदुष्टहेतोः स्मारकम्। तथा च के हेत्वाभासा इतिजिज्ञासाप्रयोजकीभूतहेत्वा-भासत्वज्ञानविषये द्वेषविषयतानवच्छेदकत्वसमानाधिकरणस्मृतिविषयतावच्छेदकत्वस्य सत्त्वेन प्रसङ्गसङ्गतेः सम्भवदुक्तिकत्वम्। एककार्यकारित्वसङ्गतेस्तु के तत्त्वनिर्णयप्रयोजकाः के विजयप्रयोजका इति जिज्ञासया संग्रहः।

अथवा—अनन्तराभिधानप्रयोजक-जिज्ञासाजनकस्मृतिप्रयोजकनिरूप्यनिष्ठसम्बन्धः सङ्गति-रिति निष्कृष्टलक्षणे के हेत्वाभासा इत्येकविधजिज्ञासयैवोभयविधसङ्गतेरपि संग्रहः स्यात्। तथा च यत्र स्ववृत्तिपक्षधर्मत्वाभाववत्त्वसम्बन्धेन दुष्टहेतोः स्मरणं, तत्र तादृशाभाववत्त्वमेव प्रसङ्गसङ्गतिः। एतन्मते उपोद्घातादिपञ्चकभिन्नत्वे सति सङ्गतित्वं प्रसङ्गत्वम्। निरूप्यते इत्यत्र भविष्यत्सामीप्ये वर्तमानार्थविवक्षणात् निरूपणे उत्तरकालीनत्वलाभः। मूलकारस्येदृशवाक्योच्चारणमेवोत्तरकालकर्तव्यत्वप्रकारकबोधानुकूलव्यापारः। उच्चारणोच्चार्य-मानयोरभेदविवक्षया वाक्यस्यापि प्रतिज्ञावाक्यत्वसिद्धिरिति पूर्वमपि प्रतिपादितम्।

**स्वहेतोः सद्धेतुत्वव्यवस्थयेवेत्यादि।**—इयमनुमितिः प्रमा स्वविषयव्याप्तिपक्षधर्मता-विशिष्टहेतुज्ञानजन्यत्वादित्यनुमानेन सद्धेतोस्तत्त्वतिर्णयप्रयोजकत्वम्। अत्र च स्वविषया-बाधितव्याप्तिपक्षधर्मताविशिष्टहेतुज्ञानजन्यत्वस्यैव हेतुत्वं वाच्यम्, तेन उत्पत्तिकालीनघटो-गन्धवानित्यनुमितौ न व्यभिचारः। अथवा स्वाश्रयत्व-स्वाश्रयजन्यत्वैतदन्यतरसम्बन्धेन

### तत्त्वचिन्तामणिः

**तत्रानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वम्,**

## दीधितिः

अनुमितीति ।—यथाश्रुतमिदं हेतुदोषाणां लक्षणम्, तद्वत्त्वं च दुष्टहेतूनाम्, तदभिप्रायेणैव उपधेयसङ्करेऽपीत्यादि वक्ष्यति ।

## जागदीशी

ननु निरुक्तयथार्थज्ञानस्य विषयतामात्रं समूहालम्बनविषयतामादायोदासीनेऽतिप्रसक्तमतो यथार्थज्ञाननिष्ठस्यानुमितिकारणीभूताभावप्रतियोगित्वस्य विषयविधयाऽवच्छेदकत्वमेवार्थो वाच्यः ।

### तात्पर्यदीपिका

प्रमात्वं साध्यमतो न व्यभिचारः । इयमनुमितिरप्रमा स्वविरोध्यनुमितिजनकहेत्वदुष्टत्वग्रहकालोनत्वादित्यनुमानेन दुष्टहेतोरपि तत्त्वनिर्णयविजयप्रयोजकत्वमिति । अथवा इयमनुमितिरप्रमा अदुष्टहेतुग्रहजन्यानुमितिविरोधित्वादिति प्रयोगः । अथवा इयमनुमितिः प्रमा स्वविरोध्यनुमितिजनकहेतौ दुष्टत्वग्रहकालोनत्वादित्यनुमानेन सर्वत्र प्रमात्वसाधनेनैवोपपत्तिरित्यस्मदुपाध्यायसतोर्थवर्याः । अथवा इयमनुमितिः प्रमा दुष्टहेतुजन्यानुमितिविरोधित्वादिति । चिन्तामणेः अनुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वरूपस्य हेत्वाभासलक्षणस्यानुमितिनिष्ठकार्यतानिरूपिता या कारणता तदाश्रयो योऽभावस्तत्प्रतियोगियथार्थज्ञानविषयत्वमित्यर्थः करणीयः । तथा चात्र कार्यतापदानुपादाने अनुमित्यभावप्रत्यक्षत्वावच्छिन्नं प्रति तादात्म्येनानुमित्यभावस्य कारणत्वाङ्गीकर्तृमतेऽनुमितिनिष्ठा प्रतियोगित्वसम्बन्धावच्छिन्ना याऽवच्छेदकता तन्निरूपितकारणताश्रयो योऽनुमित्यभावस्तत्प्रतियोगिनोऽनुमित्यात्मकयथार्थज्ञानस्य विषये वह्निमत्पर्वतादावतिव्याप्त्यापत्तिः । कारणतापदानुपादाने चानुमितिनिष्ठकार्यतानिरूपिता या कार्यत्वाऽभावत्वरूपानुयोगिता तदाश्रयो यः कार्यत्वाभावस्तत्प्रतियोगिनोऽनुमित्यात्मकयथार्थज्ञानस्य विषये वह्निमत्पर्वतादावतिप्रसङ्गापत्तिः । कार्यत्वं स्वरूपसम्बन्धविशेषः ; तच कार्यस्वरूपमेव ; अतस्तस्य कार्यत्वाभावप्रतियोगित्वाभिधानं नासङ्गतमिति भावः । कारणताश्रयो योऽभाव इत्यत्राभावपदमत्यन्ताभावत्वनिरूपितप्रतियोगितालाभाय ; अन्यथा परामर्शवद्भिन्नभेदः परामर्शस्तत्प्रतियोगियथार्थज्ञानविषये उदासीनेऽतिव्याप्त्यापत्तिः, परामर्शवद्भिन्नपदेन यत्किञ्चिद्विषयकज्ञानस्यापि धर्तुं शक्यत्वात् ।

ननु स्वरूपसम्बन्धरूपप्रयोजकत्वापेक्षया ऽन्यथासिद्धिशून्यत्वघटितकारणत्वनिवेशनं गौरवग्रस्तमिति चेन्न, अप्रामाण्यज्ञानाभावविशिष्टपरामर्शत्वेनानुमितिं प्रति कारणत्वस्य वक्तव्यतयाऽप्रामाण्यज्ञानाभावस्यापि कारणतावच्छेदकतया प्रयोजकत्वेन तत्प्रतियोगियथार्थज्ञानविषयत्वस्याप्रामाण्ये सत्त्वादप्रामाण्यज्ञानविषयीभूतपरामर्शस्य दोषत्वापत्तेः। तथा चाप्रामाण्यग्रहाभावस्यानुमितिकारणत्वविरहेण नोक्तदोषावकाश इति भावः। अतः कारणीभूताभावप्रतियोगित्वपर्यन्तमभिहितम्। कारणीभूतेतिच्विप्रत्ययसहितभूतपदानुपादाने कारणाभावपदेन कारणस्याभाव इति षष्ठीतत्पुरुषस्यापि बोधकत्वसम्भवेन परामर्शविषयेऽतिव्याप्तिः प्रसज्येत। न चाभावपदं व्यर्थमिति वाच्यम्; अयमात्मा आत्मत्वप्रकारकज्ञानप्रतियोगिकसमवायादित्यत्रानुमितिकारणीभूतो यस्तादृशः समवायसम्बन्धस्तत्प्रतियोगिज्ञानस्य

## जागदीशी

स च ह्रदो वह्निमान् धूमादित्यादौ बाधितहेतावव्याप्त इत्यत आह—यथाश्रुतेति। ज्ञाननिष्ठानुमितिप्रतिबन्धकतावच्छेदको यो बाधात्मको

### तात्पर्यदीपिका

विषयेऽतिव्याप्त्यापत्तेरतोऽभावपदमित्यस्मदुपाध्यायसतीर्थपादाः। किञ्च अभावपदमत्यन्ताभावत्वनिरूपितप्रतियोगितालाभार्थमित्यपि प्रोक्तमेवाधस्तात्। यथार्थज्ञानविषयत्वमित्यत्र ज्ञानपदं व्यर्थमिति नाशङ्कनीयम्; कामिनीजिज्ञासायाः स्वविषयज्ञानातिरिक्तज्ञानत्वावच्छिन्नं (ज्ञानसामान्यं) प्रति प्रतिबन्धकतया तद्विषये कामिनीज्ञानेऽतिप्रसङ्गवारणेन तत्सार्थक्यात्। कारणीभूताभावप्रतियोगित्वं प्रतिबन्धकत्वमिति प्रतिबन्धकलक्षणं छलतः प्रतिपादयितुकामेन मूलकारेणानुमितिप्रतिबन्धकयथार्थेत्याद्यनुक्त्वाऽनुमितिकारणीभूतेत्येवमुपदिष्टमिति सर्वमवदातम्। अप्रामाण्यज्ञानाभावस्य पृथक् कारणत्वमिति मते अप्रामाण्ये अतिव्याप्तिवारणाय तथोक्तमिति च। **निरुक्तयथार्थज्ञानस्येति** अनुमितिप्रतिबन्धकयथार्थज्ञानस्येत्यर्थः। वह्न्यभाववान् ह्रदो घटश्चेति समूहालम्बनज्ञानविषयतामादाय उदासीने घटेऽतिव्याप्तिः, ह्रदो वह्निमानित्यनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वस्य घटे सत्त्वादतो यथार्थज्ञाननिष्ठानुमितिप्रतिबन्धकतानिरूपितावच्छेदकतावद्विषयता विवक्षणीया, तथा च नोदासीने घटादावतिव्याप्तिः स्यात्; उदासीनघटादिविषयतायाः प्रकृतप्रतिबन्धकतानवच्छेदकत्वात्।

ननु यत्र यत्र बाधस्तत्र तत्रैव हेतुघटितदोषसम्भवेन स्वरूपसिद्ध्यादिकमादाय लक्षणसमन्वयसम्भवे कथं ह्रदो वह्निमान् धूमादित्यादावव्याप्तिर्दत्ता जगदीशेनेति चेन्न;—उत्पत्ति-

कालावच्छिन्नघटो गन्धवान् पृथिवीत्वादित्याद्यसङ्कीर्णबाधस्थलेऽव्याप्तिर्बाध्या। न च तत्रापि गन्धाभावव्याप्यपृथिवीत्ववान् उत्पत्तिकालीनघट इत्याकारक-सत्प्रतिपक्षस्यापि सम्भवेन तद्-घटकीभूतहेतुविषयताया अवच्छेदकत्वान्नाव्याप्तिरिति वाच्यम्। निरवच्छिन्न-साध्याभाववद्-वृत्तित्वस्यैव व्याप्तित्वेन गन्धाभावाभावस्य निरवच्छिन्नाधिकरणताया अप्रसिद्धत्वात् प्रकृत-साध्याभावव्याप्तेरेवासत्त्वात् प्रकृते सत्प्रतिपक्षासम्भवात्। न च प्रतिहेतुव्यापकसाध्याभाव-समानाधिकरणप्रतिहेतुमत्पक्षः सत्प्रतिपक्ष इति वाच्यम्, तादृशसत्प्रतिपक्षे मानाभावात्। वस्तुतस्तु विषयविरोध एव ज्ञानस्य विरोधित्वम्, तेन नात्र सत्प्रतिपक्षः सम्भवति, द्वितीयक्षणे घटे गन्धाभावव्याप्यपृथिवीत्वस्य सत्त्वेन विषयविरोधविरहात्, एकावच्छेदेनैकत्र सत्त्ववतोर्विष-ययोरेव विरोधस्यानुभविकत्वादिति दिक्।

यथाश्रुतमिदमित्यादि-दीधितिः,—इदमित्येतल्लक्षणत्रयम्, अन्यथेदंशब्दस्य एकलक्षण-परामर्शकत्वे तदुत्तरलक्षणयोर्दुष्टहेतुलक्षणत्वापत्त्या तद्दोषतादवस्थ्यं प्रसज्येत। यथाश्रुतत्वञ्च निरूढलक्षणेतरलक्षणाग्रहाजन्यशक्तिभ्रमाजन्यतत्तदर्थविषयकशाब्दबोधेच्छयोच्चरितत्वम्।

इदमत्रावधेयम्,—मूलोक्तलक्षणानां दुष्टहेतुलक्षणत्वे दोषेष्वतिव्याप्तिः; दोषलक्षणत्वे "ते च पञ्च"त्यग्रिमविभागानुपपत्तिः। अथ च हेत्वाभासपदात् हेतुवदाभासन्ते इति व्युत्पत्त्या-भासीभूता (दुष्टाः) हेतवो, हेतोराभासा इति व्युत्पत्त्या च दोषविशेषा इत्युभयेऽवबोध्यन्ते। आवश्यकश्चानयोरुपसंग्रहः। न च मणिकारेण दोषलक्षणं विधाय दुष्टहेतूनां विभागो विहित इति वाच्यम्, अप्रतिज्ञातत्वेन तद्विभागानुपपत्तेः। विभागो नाम सामान्यधर्मावच्छिन्नानां

## जागदीशी

**दोषः, येन केनापि सम्बन्धेन तद्वत्त्वमितिवक्ष्यमाणमिश्रोक्तविवक्षादरे तु दुष्टलक्षणमपि सम्भवतीत्यभिप्रायेणोक्तं यथाश्रुतमिति। तथाच दुष्टहेतो-रलक्ष्यत्वात् तत्राव्याप्तिर्न क्षतिकरीति भावः। नन्वेवं दुष्टहेतूनां प्रागनुपक्रान्त-त्वात् ते च पञ्चेत्यग्रिममूलेन तेषां विभागोऽसङ्गत इत्यत आह—तद्वत्त्व चेति तादृशविषयवत्त्वं चेति।**

## तात्पर्यदीपिका

परस्परविरुद्धतद्व्याप्यधर्मपुरस्कारेण प्रतिपादनम्, एवञ्च दुष्टहेतूनां विभागकरणे तत्र धर्मित्वेन दुष्टहेतोर्लक्षणकरणं युक्तं स्यात्; न दोषलक्षणम्; अतो मूलकारसूचितन्यूनतापरिजिहीर्षुणा शिरोमणिना 'यथाश्रुतमिदं (लक्षणत्रयं) हेतुदोषाणां लक्षणम्, तद्वत्त्वं (दोषवत्त्वं) च दुष्टहेतूनामिति समाहितम्। अन्यथा ते च पञ्चेत्यादिग्रन्थस्य दोषविभागपरत्वे विरुद्धस्य

व्यभिचार्याद्यनतिरिक्तत्वेन हेतूनां पञ्चत्वकथनासङ्गतिरित्याशङ्का एव नावतरेत्। अत एव मूलकृता उपरिष्टादुपधेयसङ्करेऽपीत्यादिग्रन्थेन दुष्टहेतूनामैक्यसम्भवेऽप्युपाधीनां व्यभिचार-विरोधादिरूपदोषाणां भिन्नत्वमुपदर्श्य पञ्चत्वकथनोपपत्तिः सूपपादितेति संक्षेपः।

**येन केनापि सम्बन्धेनेति**।—स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वादिसम्बन्धेनेत्यर्थः। स्वं दोषः। मिश्रोक्तविवक्षादरे "केचित्तु दुष्टानामेवे"त्यादिना "प्राहु"रित्यन्तेन ग्रन्थनेति

## जागदीशी

**दुष्टहेतूनामित्यस्य लक्षणमिति पूर्वेणान्वयः। तथा चानुमितिकारणीभूता-भावप्रतियोगियथार्थज्ञानस्य विषयो यत्त्वेति व्युत्पत्त्या दुष्टहेतोर्लक्षणमवगत्यैव तेषामग्रे विभाग इति भावः। तदभिप्रायेणैवेति दोषलक्षणाभिप्रायेणैवेत्यर्थः। अन्यथा दुष्टहेतूनां लक्ष्यत्वे विरुद्धादिहेतोर्व्यभिचारित्वनियमात् पृथग् विभागो न स्यात्, मिथो व्यावर्तकानां धर्माणामेव विभाजकत्वादिति भावः।**

### तात्पर्यदीपिका

भावः। **दुष्टहेतोरिति** ह्रदो वह्निमान् धूमादितिबाधितहेतोरित्यर्थः। **अलक्ष्यत्वा-दिति**। दोषाणामेव लक्ष्यत्वादित्यर्थः। **न क्षतिकरीति** न लक्षणदूषिकेत्यर्थः। **यादृश-विषयवत्त्वमिति** प्रागुक्त-स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषज्ञानविषयवत्त्व-मित्यर्थः। तादृशज्ञानस्य विषयो यत्त्वेति बहुव्रीहिसमासाश्रयणे दुष्टहेतोर्लक्षणमपि सम्भवतीति मनसिकृत्य तेषां विभागः कृत इति भावः। **व्यावर्तकानामिति** विरुद्धानामित्यर्थः। विरुद्धादिहेतोः गोत्ववान् अश्वत्वादित्यादिहेतोः, गोत्वाभाववति अश्वे अश्वत्वस्य विद्यमान-त्वादश्वत्वं व्यभिचार्येव। यत्र यत्र विरुद्धत्वं तत्र तत्र व्यभिचारित्वमिति नियमस्यावश्याङ्गी-कार्यत्वेन पृथग् विभागोऽसङ्गत एव स्यादिति भावः।

अनुमितिपदस्यानुमितिसामान्यपरत्वे अनुमितित्वव्यापकप्रतिवध्यतानिरूपितप्रतिबन्धकता-शालियथार्थज्ञानविषयत्वमित्ययमर्थः स्यात्, तत्रानुमितित्वव्यापकप्रतिवध्यताया अप्रसिद्धत्वेना-

## दीधितिः

**तत्रानुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेनानु-मितितत्कारणज्ञानपरं साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्या-कारानुमितिपरं वा।**

### जागदीशी

ननु व्यभिचारादीनां ज्ञानस्यानुमित्यप्रतिवन्धकत्वात् तत्राव्याप्तिरत आह— तत्रेत्यादि। अनुमितिपदमनुमिति-तत्कारणपरमित्यन्वयः। अनुमितिपदेनानुमितित्वादिप्रत्येकरूपेणोभयवोधने युगपद्वृत्तिद्वयविरोध इत्यत आह— अनुमितीति। अनुमितिनिष्ठकार्यताया यन्निरूपकं तत्सम्वन्धित्वेनेत्यर्थः।

### तात्पर्यदीपिका

सम्भवः; यत्किञ्चिदनुमितिपरत्वे ह्रदो वह्निमानित्यनुमितिप्रतिवन्धकह्रदो वह्न्यभाववानितियथार्थज्ञानविषयीभूतवह्न्यभाववद्ह्रदादेः पर्वतो वह्निमान् धूमादित्यादौ दोषतापत्तिः। अतोऽनुमितिपदस्य तत्पक्षसाध्यहेतुकानुमितिप्रतिवन्धक-यथार्थज्ञानविषयस्तत्पक्षसाध्यहेतुकानुमितौ दोष इत्यर्थो वाच्यः, तथा च सत्येव व्याप्तिज्ञानप्रतिवन्धकव्यभिचारादावव्याप्तिः, व्यभिचारनिश्चयस्य व्याप्तिज्ञानं प्रति प्रतिवन्धकत्वेनानुमित्यप्रतिवन्धकत्वादिति तात्पर्यम्।

**युगपद्वृत्तिद्वयविरोध** इति—सकृदुच्चरितादनुमितिपदाद् व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यज्ञानरूपस्य सङ्केतितार्थस्य तात्पर्यानुपपत्तिं विनापि व्याप्तिज्ञानादेर्लाक्षणिकार्थस्य च शक्तिलक्षणयोर्द्वयोर्वृत्त्योर्युगपद्वोधनासम्भवाद् विरोधः फलतः प्रतिरोध एव, तात्पर्यानु-

### जागदीशी

तथा चानेन रूपेणाजहत्स्वार्थलक्षणेति भावः। निरूपकत्वं चामुकनिष्ठकारणताया इयं कार्येत्यनुभवसाक्षिकस्वरूपसम्वन्धविशेषः; तत्सम्वन्धित्वञ्चानुमिति-तत्कारणयोरुभयोरेव।

केचित्तु अनुमितिनिष्ठकार्यतानिरूपकमनुमितिकारणत्वं तत्सम्वन्धित्वेनेत्यर्थः, परामर्शे तदाश्रयत्वस्यानुमितौ तन्निरूपितकार्यत्वस्य सत्त्वात्। वस्तुतस्तु अनुमितिनिष्ठकार्यतानिरूपकेत्यत्र वहुव्रीहितोऽनुमितिनिष्ठकार्यतानिरूपितसम्वन्धवत्त्वलाभादाश्रयत्वे प्रतियोगित्वे च निरूपकत्वस्यासत्त्वेऽपि न क्षतिः, निरूपितत्वस्यैव तत्र सत्त्वादित्याहुः।

### तात्पर्यदीपिका

पपत्तिवशात् शक्त्या वोधप्रतिरोधे शक्यसम्वन्धरूपया लक्षणया वोधाभ्युपगमात्। अन्यथा "सकृदुच्चरितः शब्दः सकृदर्थं गमयती"तिनियमभङ्गः प्रसज्येत। तत्सम्वन्धित्वेनेति सम्वन्धित्वमत्र ज्ञानत्वेन विशेषणीयम्, अन्यथा यत्पक्षसाध्यकस्थलेऽनुमित्साकालेनैवानुमितित्वत्रानुमित्सैव पक्षतेति तत्रानुमित्साप्रतिवन्धकसिद्धिविषये साध्यवत्पक्षेऽतिव्याप्त्यापत्तेः।

अनेन रूपेणेति कार्यतानिरूपकसम्बन्धित्वरूपेण सम्बन्धिनोः कार्यकारणयोर्लाभात् शक्यतानवच्छेदकधर्मप्रकारेण शक्याशक्योभयबोधकप्रवृत्तिरूपाजहत्स्वार्थलक्षणेति भावः।

बहुव्रीहित इत्यादि,—अनुमितिनिष्ठकार्यता निरूपिका यस्येति बहुव्रीहिसमास बलादनुमितिनिष्ठकार्यतानिरूपितसम्बन्धवत्त्वलाभात् परामर्शे प्रतियोगित्वरूपनिरूपितस्यानुमितौ आश्रयत्वरूपनिरूपितत्वस्य च सत्त्वाद् द्वयोरुपसंग्रह इति भावः।

'अनुमितिपदमनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वेने'त्यादिः 'साध्यव्याप्यहेतुमान् पक्षः साध्यवान्' इत्यन्तशिरोमणिग्रन्थः। तत्र जगदीशः—अनुमितिपदस्य लाक्षणिकत्वापातादाचार्यीयानुमितिमात्रस्यैव लिङ्गोपधानपक्षमनुसृत्य मूलं व्याचष्टे साध्यव्याप्येत्यादिना।

## जागदीशी

अत्रानुमितिपदस्य लाक्षणिकत्वापातादाचार्यीयानुमितिमात्रस्यैव लिङ्गोपधानपक्षमनुसृत्य मूलं व्याचष्टे साध्यव्याप्येत्यादिना। मणिकारमताभिप्रायेणैव तद्व्याख्यायां तु सर्वत्र भ्रमानुमितौ मानाभावेन यत्रोक्तरीत्या विशिष्टानुमितिः कदापि नोत्पन्ना तत्रत्यदोषेष्वव्याप्तिप्रसङ्गादत एव पक्षः

## तात्पर्यदीपिका

अथात्र लक्षणे समासतो वक्ष्यमाणरीत्या प्रकृतसाध्यकप्रकृतहेतुकानुमितिनिष्ठकार्यताविशिष्ट—( स्वानुयोगित्व-स्वप्रतियोगित्वैतदन्यतरसम्बन्धेन ) ग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकयथार्थज्ञानीयविषयतावन्तो हेत्वाभासा इत्युक्तौ ह्रदो वह्निमान् पर्वतश्च जलवानितिसमूहालम्बनग्रहस्यापि प्रकृतवह्निसाध्यकधूमहेतुकानुमितिनिष्ठकार्यताविशिष्टग्रहतया तन्निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वस्य पर्वतो जलाभाववानितिज्ञाने सत्त्वात् तादृशप्रतिबन्धकतावच्छेदकयथार्थज्ञानीयविषयताश्रये जलाभाववत्पर्वतरूपोदासीनविषयेऽतिव्याप्तिः। तादृशग्रहत्वव्यापकत्वोक्तौ च तादृशग्रहत्वव्यापकप्रतिबध्यतापदेन तादृशसमूहालम्बनज्ञानीयतादृशप्रतिबध्यता धर्तुं न शक्या। तादृशान्यतरसम्बन्धेन कार्यताविशिष्टग्रहत्वस्य ह्रदो वह्निमानित्याकारकसमूहालम्बनज्ञानेऽपि सत्त्वात् तत्र च पर्वतोजलाभाववानितिनिश्चयप्रतिबध्यत्वस्यासत्त्वात्। ननु निरुक्तान्यतरसम्बन्धेन तादृशकार्यताविशिष्टग्रहत्वेनानुमितितत्कारणोभयग्रहस्य धर्तुं शक्यतया ह्रदो वह्न्यभाववान् वह्न्यभावव्याप्यजलवान् वा, एतदन्यतरज्ञाननिष्ठप्रतिबन्धकतानिरूपिका कापि प्रतिबध्यता तस्य व्यापिका न स्यादिति चेत्तर्हि स्वानुयोगिग्रहत्वव्यापकत्व-स्वप्रतियोगिग्रहत्वव्यापकत्वैतदन्यतरसम्बन्धेन

प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकानुमितिनिष्ठकार्यताविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकता-वच्छेदकयथार्थज्ञानीयविषयतावन्तो हेत्वाभासा इति वक्तव्यम्। न चान्यतरत्वेन संसर्गत्वमप्रामाणिकमिति वाच्यम्, परन्तु अन्यतरत्वस्य संसर्गतावच्छेदकत्वाभ्युपगमे कार्यकारणभावद्वयमिति लाघवमन्यथा तु कार्यकारणभावचतुष्टयमित्यादिनाऽऽकाङ्क्षाग्रन्थे मथुरानाथेनान्यतरत्वस्य संसर्गताया अवच्छेदकत्वमनवच्छेदकत्वञ्चेतिमतद्वयं स्फुटीकृतम्।

अथवा यत्प्रकृतपक्षक-प्रकृतसाध्यकानुमितित्वव्यापकप्रतिबध्यत्वं यच्च प्रकृतपक्षकप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टप्रकृतहेतुविषयकानुमितित्वव्यापकप्रतिबध्यत्वं तदन्यतरप्रतिबध्यतानिरूपितप्रतिबन्धकताया लक्षणघटकत्वे न काप्यनुपपत्तिरिति प्राहुः।

वस्तुतस्तु अनुमितिनिष्ठकार्यतानिरूपकसम्बन्धित्वपदेन तादृशकार्यताप्रतियोगित्वतादृशकार्यत्वानुयोगित्वोभयसम्बन्धेन कार्यतावत्त्वं तादृशोभयसम्बन्धवत्त्वं वा विवक्षणीयम्। तथाच तादृशोभयसम्बन्धाश्रयग्रहत्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशेनैवातिव्याप्तिवारणं सम्भवतीति भावः। (कार्यतासम्बन्धेन परामर्शविशिष्टानुमितिस्तत्र कार्यतारूपसम्बन्धस्य अनुमितावनुयोगित्वं परामर्शे प्रतियोगित्वम्)।

नन्वेतत्कल्पेऽपि अनुमितिपदेन लक्षणया साध्यव्याप्यहेतुमान् पक्षः साध्यवानित्याकारकानुमितेर्लाभस्तत् कथं पूर्वकल्पापेक्षयैतत्कल्पस्य समीचीनत्वं प्रतिभाति? सत्यं निरूढलक्षणया तादृशार्थसम्भवात्। सा च शक्तितुल्या। शक्यतानवच्छेदकधर्मप्रकारेण शक्याशक्योभयबोधिका वृत्तिरजहत्स्वार्थलक्षणा।

जन्यताविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकताशालियथार्थज्ञानविषयत्वम्, वैशिष्ट्यञ्च स्वविशिष्टानुमितित्वव्यापकत्वसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यञ्च स्वनिरूपितजनकतावच्छेदकीभूतहेतुप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यत्वाभिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्वसम्बन्धेनेति कल्पान्तरम् (स्वपदेन तादृशसमूहालम्बनानुमितिनिष्ठजन्यता एव धर्तुं शक्या)।

प्रकृतपक्षसाध्यकानुमितित्वावच्छिन्नकार्यताविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकयथार्थज्ञानीयविषयत्ववत्त्वं विवक्षितम्। वैशिष्ट्यञ्च स्वाश्रयवृत्तिभेदप्रतियोगितावच्छेदकत्वस्वनिरूपकज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेनेति कल्पान्तरम्।

इत्थमत्र चिन्तनीयम्, यदत्र लक्षणघटकीभूतप्रतिबध्यतायां तादृशसम्बन्धिग्रहनिष्ठत्वनिवेशे उदासीनेऽतिव्याप्तिः, तादृशग्रहत्वव्यापकत्वनिवेशे चाश्रयासिद्ध्यादौ लक्षणसङ्गमनेऽपि बाधव्यभिचारादावव्याप्तिः, बाधादिनिश्चयीयप्रतिबध्यतायास्तादृशग्रहत्वाव्यापकत्वादित्यादि-

दोषसम्भवे जगदीशस्य पूर्वकल्पे लाक्षणिकत्वापत्तिरूपदोषदानमसङ्गतमिति। न च तादृशप्रतिबध्यतायां प्रकृतहेतुतावच्छेदकावच्छिन्नलिङ्गताकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताक-प्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यतावच्छेदकविषयितावच्छिन्नत्वं निवेश्यं विविधहेतुकपरामर्शजन्यानुमितौ व्यभिचारवारणायाव्यवहितोत्तरत्वसम्बन्धेन तल्लिङ्गकपरामर्शविशिष्टतत्पक्षकतत्साध्यकानुमितिं प्रति तल्लिङ्गकपरामर्शस्य हेतुतया परामर्शीयविषयिताया अपि कार्यतावच्छेदकत्वेन न व्यभिचारादावव्याप्तिस्तावतैवोदासीने नातिव्याप्तिस्तज्ज्ञानीयप्रतिबध्यतायाः कार्यतावच्छेदकविषयित्वानवच्छिन्नत्वादितिवाच्यम्; वह्निव्याप्यधूमघटवान् पर्वत इत्येकत्वद्वयं रीत्या ज्ञानमादाय घटाभाववत् पर्वतेऽतिव्याप्तिवारणाय जन्यतानवच्छेदकविषयित्वानवच्छिन्नत्वस्यैव वाच्यतया व्यभिचारादावसम्भवापत्तेः, तादृशज्ञानीयप्रतिबध्यतायास्तादृशजन्यतानवच्छेदकीभूतेन साध्यव्याप्यो हेतुरिति ज्ञानीयविषयत्वेनावच्छिन्नत्वादिति।

केचित्त्वेवं मन्यन्ते - स्वावच्छेदकत्व - स्वनिरूपितकारणतावच्छेदकत्वाऽन्यतरसम्बन्धेन कार्यताविशिष्टान्यकिञ्चिद्धर्मावच्छिन्नविषयिताशून्यज्ञाननिष्ठत्वस्य प्रतिबध्यतायां निवेशान्नोक्तदोषाणामवकाशः। न च जगदीशमते समानाधिकरण-प्रकारताविशेष्यतयोरैक्येन तेजस्त्वव्याप्यवह्निपक्षकतेजस्त्वसाध्यक(समवायेन)वह्निहेतुकस्थले तेजस्त्वव्याप्यो वह्निः, तेजस्त्वव्याप्यवह्निमानिति ज्ञानस्य तादृशजन्यताविशिष्टान्यविषयिताशून्यत्वेन तन्निष्ठप्रतिबन्धकताशालितेजस्त्वाभाववद्वृत्तिमत्तेजस्त्वव्याप्यवह्न्यभाववत्तेजस्त्वव्याप्यवह्निरूपविशिष्टेऽतिव्याप्तिः; तादृशज्ञानस्य सामान्याभावावगाहितया सामान्यघटितविशेषवत्ताबुद्धिप्रतिबन्धकत्वादिति चेन्न, समानाधिकरणविषयतयोरैक्यानभ्युपगमेनैतल्लक्षणस्योक्तत्वादिति।

यद्वा प्रकृतपक्षकप्रकृतसाध्यकानुमितित्वव्यापकं यत् प्रतिबध्यत्वम्, यच्च प्रकृतपक्षकप्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुविषयकानुमितित्वव्यापकं प्रतिबध्यत्वम्, एतन्यतरनिरूपितप्रतिबन्धकताया लक्षणघटकत्वान्न कोऽपि दोषः।

अथात्रानुमितिपदम्—आचार्यानुमिति-परमितिव्याख्याने व्यतिरेकव्याप्तिज्ञानस्याचार्यमतेऽनुमित्यजनकत्वेन प्रकृतानुमितौ तस्या अविषयत्वात् कथं व्यतिरेकव्याप्तिज्ञानविरोधिन्यनुपसंहारिणि प्रकृतानुमितिप्रतिबन्धकताघटितलक्षणसमन्वयः। न चान्वयव्यतिरेकव्याप्तिविषयकानुमितिरेव लक्षणघटिकेति वाच्यम्, अनुमितितत्कारणज्ञानपरमिति कल्पपरित्यागबीजप्रतिपादनस्य लाक्षणिकत्वापातादित्यादिग्रन्थस्य सङ्गतिविरोधादिति चेन्न, आचार्यानुमितिमात्रस्यैव लिङ्गोपधानपक्षमनुसृत्य व्याचष्टे इति ग्रन्थो हि अनुमितिपदस्य लक्षणां विनापि व्याप्तिविषयकानुमितिबोधकत्वमिति सूचकः, न तु तत्सम्मतानुमितिविशेषसूचकः; तथा चैक-

विधव्याप्तिविशिष्टहेतुमत्तानिश्चयादनुमितिजनने व्यभिचारवारणाय स्वमतेऽपि प्रकृतसाध्यनिरूपितव्याप्तिद्वयविशिष्टहेतुधर्मितावच्छेदककसाध्यप्रकारकानुमितित्वावच्छिन्नं प्रति प्रकृतसाध्यनिरूपितव्याप्तिद्वयविशिष्टहेतुमत्तानिश्चयत्वेन कारणत्वमित्येवं विधयैव व्यतिरेकव्याप्तिविशिष्टहेतुमत्तानिश्चयस्यापि कारणत्वम्—; न तु तादृशव्याप्तिविशिष्टहेतुमत्तानिश्चयाव्यवहितोत्तरत्वं कार्यतावच्छेदकमिति ध्वनितम्। तथाच व्यतिरेकव्याप्तेरनुमितिविषयत्वे बाधकाभावः। अत्र यदि व्याप्तिद्वयमुभयत्वेन रूपेण हेत्वंशे निवेश्यते, तदोभयव्याप्यभाववद्धेतोर्दोषत्वापत्तिः। यदि च प्रत्येकरूपेण निवेश्यते, तदा व्यतिरेकव्याप्तिविशिष्टधूमेतदुभयाभाववत्पक्षस्य दोषत्वापत्तिरिति चेन्न, प्रकृतपक्षसाध्यकानुमितिजनकतावच्छेदकप्रकारतात्वेन व्याप्तिद्वयविषयतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारताया निवेश्यत्वात्। न च तथापि अनुपसंहारिणि अव्याप्तिः, तन्मते एकदानुमितावुभयव्याप्त्योरभावेनान्ययव्याप्तिविशिष्टहेत्ववगाह्यनुमितौ तत्प्रतिबध्यताया असत्त्वेन प्रकृतानुमितित्वव्यापकत्वविरहादिति वाच्यम्, व्यापकत्वसम्बन्धेन प्रकृतहेतुतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यत्वाभिन्नप्रकारता-

## जागदीशी

**साध्यवान् साध्यव्याप्यवांश्चेति समूहालम्बनानुमितिर्नोपात्ता। लिङ्गोपधानमते सर्वत्र तादृशानुमितेरावश्यकत्वेन नाव्याप्तिस्तदवस्था। न च ह्रदो वह्निमान्**

### तात्पर्यदीपिका

निरूपित-पक्षतावच्छेदकावच्छिन्नविशेष्यत्वाभिन्नोभयधर्मावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयताकानुमितित्वावच्छिन्नजन्यताविशिष्टप्रतिबध्यतानिरूपितत्वस्य प्रतिबन्धकतायां निवेशात्। तथा च तत्सम्बन्धेन तत्तज्जन्यताविशिष्टतत्तत्प्रतिबध्यतामादाय न व्यभिचारादावव्याप्तिरिति परमार्थः।

**अनुमितिपदस्य लाक्षणिकत्वापातादाचार्यीयानुमितिमात्रस्यैव लिङ्गोपधानपक्षमित्यादि**जगदीशग्रन्थः। नन्वाचार्यमतेऽनुमितिपदस्य यथाश्रुतार्थकत्वमनुमितेर्नियमतस्तादृशाकारत्वादिति न लक्षणादर इत्याचार्यमताश्रयणस्य हृदयम्, तन्न संगच्छते, तन्मतेऽपि साध्यव्याप्यनानाहेतुमत्तापरामर्शात् साध्यानुमितिर्जायते, सा च साध्यव्याप्यहेतुमत्पक्षावगाहिनी, यत्र धूमव्याप्यालोकवत्पर्वतपरामर्शात् धूमव्याप्यालोकवान् पर्वतो धूमवानित्यनुमितिर्जायते तत्र तादृशानुमितौ वह्निर्धूमव्याभिचारीति ज्ञानस्याप्रतिबन्धकतया

व्यभिचारेऽव्याप्तिभियाऽनुमितिपदस्य विशिष्टपर्वतपक्षकधूमव्याप्यवह्निप्रकारकानुमितिपरत्वमावश्यकमिति लक्षणाया आवश्यकत्वात्। न च प्रकृतानुमितिपरत्वमावश्यकमिति लक्षणादर इति वाच्यम्; अन्वयव्यतिरेकव्याप्त्योर्मध्ये यादृशव्याप्तेर्ज्ञानात् यादृशानुमितिर्जायते तादृशव्याप्तिविशिष्टहेतुमत्पक्षमवगाहते, नत्वन्यविधव्याप्तिविशिष्टहेतुमत्पक्षमिति साधारण्यानुपसंहारित्वयोरेकतराव्याप्तिभिया विशिष्टान्वयव्यतिरेकव्याप्तिविशिष्टहेतुमत्पक्षावगाह्यनुमितिपरतया अनुमितिपदस्य लक्षणाया आवश्यकत्वादिति चेन्नैवम्, अनुमितिपदेन कार्यतानिरूपितसम्बन्धित्वेन बोधेऽनुमितिपदस्याधुनिकलक्षणापातात् तत्पक्षकादिघटितविशेषपरतायां निरूढिलक्षणायाः शक्तितुल्यत्वात्। अनादिकालसिद्धलक्षणा निरूढिलक्षणा।

स्वलिङ्गकानुमितिकारणीभूताभावेत्यादिजगदीशग्रन्थे-यद्रूपावच्छिन्नविषयित्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपावच्छिन्नप्रकारकयथार्थज्ञानविषयत्वमित्यर्थः। तेन प्रकृतानुमितिप्रतिबन्धकत्वाश्रयवह्न्यभावादिकं साध्याभाववद्वृत्तित्वादिकं वादाय किञ्चिद्धर्मिकतत्प्रकारकं धूमेन समूहालम्बनमादाय स्वविषयकप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन वह्निमान् धूमादित्यादौ यथार्थपददानेऽप्यतिव्याप्तिरित्यसदुपाध्यायसतीर्थाः।

अत्र ज्ञानविषयत्वं स्वविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन बोध्यम्, तत्तत्सम्बन्धप्रवेशे गौरवात्। नन्वत्र काञ्चनमयधूमादेर्हेतुतास्थले हेतौ हेतुतावच्छेदकवत्त्वाऽप्रसिद्ध्याऽव्याप्तिः। यत्किञ्चिद्धेतुतावच्छेदकवत्त्वसम्बन्धोक्तौ च प्रमेयधूमादिना वह्नेः साधने घटादेरपि दुष्टत्वापत्तिः, यत्किञ्चिद्धेतुतावच्छेदकस्य प्रमेयत्वस्य घटादौ सत्त्वादिति चेन्न, स्वविषयप्रकृतहेतुत्वाश्रयवृत्तितावच्छेदकहेतुतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदक -- रूपवृत्तिनिरूपकतावत्त्वसम्बन्धेन। रूपवृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। अथवा हेतुताव्याप्यहेतुतावच्छेदकवत्त्वसम्बन्धेन निरुक्तज्ञानविषयत्वं वाच्यमित्यदोषः। अत्र च तादृशप्रतियोगिहेतुविषयकसमूहालम्बनमादाय लक्षणसमन्वयः। यत्र तादृशसमूहालम्बनाप्रसिद्धिस्तत्र संसर्गप्रसिद्ध्यर्थं नित्यज्ञानवृत्तिविषयतैव प्रयोजनीया। तदर्थमेव नित्यज्ञानवृत्तिविषयतामादाय लक्षणसम्भवादिति जगदीशः।

वस्तुत आचार्यमताभिप्रायकोऽयं ग्रन्थः। तथा च तन्मते व्यतिरेकव्याप्तिज्ञानस्यानुमित्यहेतुत्वेऽपि असमानप्रकारकज्ञानस्यापि विरोधित्वमतेऽनुपसंहारित्वज्ञानस्यापि अन्वयव्याप्तिज्ञानविरोधित्वान्नानुपसंहारिण्यव्याप्तिः। अत एवानुमितिग्रन्थे व्यभिचारधीविरोधिधीविषयत्वेनाऽन्वयव्यतिरेकव्याप्त्योरनुगमादिति दीधितिकृतोक्तमिति द्रष्टव्यम्।

## जागदीशी

**घटत्वादित्यादौ वह्न्यभाववद्घटेऽतिव्याप्तिः, घटत्ववति वह्न्यभाववत्तानिश्चयस्यापि घटत्ववद्ध्रदो वह्निमानित्यनुमितिविरोधित्वादिति वाच्यम्, साधनवन्निष्ठ-साध्याभावस्य व्यभिचारत्वेन मणिकारमते तस्य लक्ष्यत्वादिति ध्येयम्।**

### तात्पर्यदीपिका

ह्रदो वह्निमान् घटत्वादित्यत्र वह्न्यभाववद्घटेऽतिव्याप्तिमाशङ्क्य हेत्वधिकरणनिष्ठसाध्याभावस्यापि व्यभिचारतया लक्ष्यत्वमङ्गीकृतं जगदीशेन। न चात्र हेतुसामानाधिकरण्येन साध्याभावस्यापि व्यभिचारतया घटत्वावच्छेदेन वह्न्यभावस्य तद्घटिततया विशिष्टान्तराघटितत्वमेव नास्तीति, कथं तस्य व्यभिचारित्वमङ्गीकृतमिति वाच्यम्, अप्रामाण्यज्ञानस्योत्तेजकत्वानुरोधेन प्रतिबन्धकताया विभिन्नत्वेन स्वातिरिक्तं यत्प्रतिबन्धकताऽनतिरिक्तवृत्तीत्यादिनिष्कृष्टविशिष्टान्तराघटितत्वस्यात्राप्यनपायात्। एवमत्र विचिन्तनीयम्,—घटत्वावच्छेदेन वह्न्यभावव्याप्यवत्तानिश्चयस्यापि घटत्वधर्मितावच्छेदकवह्न्यनुमितिविरोधितया तत्रातिव्याप्तिः। न च सोऽपि व्याभिचारविशेष इति वाच्यम्, साधनवति साध्याभावव्याप्यवत्त्वादिकं तु अविरोधित्वान्नाभास इत्यादि साधारणग्रन्थे दीधितिकृता तस्याभासत्वखण्डनात्।

न चैतन्मते घटपक्षकगगनसाध्यकधूमहेतुकस्थले ( हेतुव्यापकसाध्यसामानाधिकरण्यस्यैव व्याप्तित्वे ) धूमव्यापकगगनाधिकरणवृत्तिधूमवद्घटो गगनवानित्यनुमितेरवश्यं स्वीकर्तव्यतया तत्र वृत्त्यवच्छेदेन गगनवत्तानिश्चयप्रतिबन्धकीभूत-वृत्तिमान् गगनाभाववान् इत्याकारकज्ञानविषये बाधस्वरूपासिद्ध्यनात्मकेऽतिव्याप्तिरिति वाच्यम्। अनुमितित्वव्यापकप्रतिबध्यतायां वृत्त्यवच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यताभिन्नत्वस्य निवेशनीयत्वात्। गगनाधिकरणवृत्तिधूमवद्घट इत्येतदंशे वृत्त्यवच्छेदेन गगनवत्तानिश्चयः; वस्तुतस्तु अप्रामाण्यज्ञानानामननुगतरूपेणैवोत्तेजकताया वाच्यतया उक्तस्थलीयाप्रामाण्यज्ञानस्य उत्तेजककोटावप्रवेशेनैवोक्तातिव्याप्तिवारणं सम्भवतीति विभावनीयम्।

नन्वेवं वृत्तिमान् गगनवानित्यनुमितिस्थलीय—वृत्तिमान् गगनाभाववानितिबाधे कथं लक्षणसमन्वयः। नन्वनुमितित्वव्यापकप्रतिबध्यतायां निरुक्तसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिग्रहत्वव्यापकप्रतिबध्यताभिन्नत्वस्य निवेशने काञ्चनमयवह्निमान् पर्वत इत्यनुमितिप्रतिबन्धकीभूतकाञ्चनमयत्वाभाववद्वह्निरिति ज्ञानविषयेऽव्याप्तिरिति चेन्न, साध्यतावच्छेदकानवच्छिन्नप्रकारतानिरूपितवृत्त्यवच्छिन्नविशेष्यताशालिग्रहत्वव्यापकप्रतिबध्यतायां साध्यताव-

च्छेदकविशिष्टसाध्यग्रहत्वव्यापकप्रतिबध्यताभिन्नत्वस्य निवेशनीयत्वात्। न चैवमपि ह्रद-पक्षकवह्निसाध्यकधूमहेतुकस्थले वह्निव्याप्यधूमवान् ह्रदोवह्निमानित्याकारकज्ञानप्रतिबन्धक-साध्यव्याप्याभाववान् पक्षः साध्यव्याप्यधूमाभाववांश्चेत्यादिज्ञानस्य विषयेऽतिव्याप्तिरिति वाच्यम्, अनुमितित्वव्यापकप्रतिबध्यतायां साध्यव्याप्तिप्रकारतानिरूपितहेतुविशेष्यताशालि-

## दीधितिः

तेनैकत्र हेतौ व्यभिचारादिग्रहेऽप्यन्यस्य परामर्शादनुमित्युत्पादेन व्यभिचाराद् व्याप्त्यादिज्ञानेनान्यथासिद्धत्वाच्च व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपि न क्षतिरिति वदन्ति।

## जागदीशी

व्यभिचारादिति-व्यभिचारादिग्रहाभावस्यानुमित्यजनकत्वेऽपीत्यग्रेणान्वयः। ननु तद्धेतुकानुमितिं प्रति तद्धेतौ व्यभिचारज्ञानाभावस्य हेतुत्वं वाच्यम्, अतो न व्यभिचार इत्यत आह—व्याप्त्यादीति। यद्वा कारणताघटकनियमांशस्य व्यतिरेकं प्रदर्श्यानन्यथासिद्धत्वाभावमाह—व्याप्त्यादीति। न क्षतिः न व्यभिचारादावव्याप्तिः।

## तात्पर्यदीपिका

ग्रहत्वाव्यापिका सती हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता-शालिग्रहत्वाव्यापिका सती या साध्यव्याप्यहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्ष-तावच्छेदकावच्छिन्नविशेष्यताशालिग्रहत्वव्यापिका प्रतिबध्यता तद्भिन्नत्वस्यापि निवेश-नीयत्वात्। उक्तप्रतिबध्यतायां हेतुतावच्छेदकविशिष्टहेतुग्रहत्वव्यापकत्वं निवेश्यं, नातो हेत्वप्रसिद्धिः। साध्यव्याप्यहेतुतावच्छेदकावच्छिन्नेत्यादिनिवेशात् साध्यव्याप्यभाववान् हेतुरित्यत्र नाव्याप्तिः। हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितेत्यादिनिवेशाद् धूमाभाववान् पक्ष इत्यत्र नाव्याप्तिरिति ध्येयम्।

व्यभिचारज्ञानस्यानुमितिप्रतिबन्धकत्वमङ्गीकुर्वतां मतं दूषयति दीधितौ तेनेत्यादिना। तेनानुमितिपदस्य एतादृशानुमितिपरत्वव्याख्यानेन। एकत्र हेतौ वह्नित्वाद्येकधर्मावच्छिन्ने व्याप्तिपक्षधर्मत्वावगाहिज्ञानाद् व्यभिचारः, कारणासत्त्वे कार्योत्पादादित्यर्थः।

न च यत्र तद्रूपावच्छिन्ने व्यभिचारज्ञानं ततो दोषविशेषजन्यतद्रूपावच्छिन्नतल्लिङ्गक-परामर्शस्तदुत्तरमनुमित्युत्पादेन तादृशस्थल एव व्यभिचारसम्भवेन कथमन्यस्येत्युक्तमिति वाच्यम्, तत्र क्षणैकविलम्बेनानुमित्युपगमे व्यभिचारासम्भवादेकत्वेत्यादिग्रन्थावतारस्य सम्यक्त्वात्।

ननु यत्र पूर्वं परामर्शस्ततो दोषविशेषजन्यतद्धेतुधर्मिकव्यभिचारज्ञानादनुमितिस्तत्र (कारणाभावेनैव क्षणैकविलम्बेनानुमित्यभ्युपगमासम्भवात्) व्यभिचार इति चेन्न, दोष-विशेषाद्यजन्यव्यभिचारग्रहाभावस्य कारणत्वकल्पनात्।

न च जगदीशोक्त-तद्धेतुकानुमितिं प्रति तद्धेतौ व्यभिचारज्ञानाभावस्य हेतुत्वपक्षस्वीकारेऽपि धूमव्याप्यवह्निमानित्याकारकशाब्दादिपरामर्शोत्पत्तिद्वितीयक्षणे यत्र लौकिकसन्निकर्षादिजन्यो धूमव्यभिचारिवह्निः धूमव्याप्येन्धनवानितिसमूहालम्बनग्रहस्तज्जन्यानुमितेरुक्तस्वाव्यवहितो-त्तरत्वसम्बन्धेन वह्नित्वावच्छिन्नधर्मिकव्याप्त्यादिज्ञानविशिष्टत्वाद् व्यभिचारग्रहाभावरूपकारणा-सत्त्वेन व्यभिचारतादवस्थ्यमिति वाच्यम्, निरुक्तसम्बन्धेन व्यभिचारग्रहविशिष्टान्यानुमितिं प्रत्येव व्यभिचारग्रहाभावस्य हेतुत्वात्। ननु व्यभिचारग्रहाभावस्य कारणत्वे कथं तस्य

## दीधितिः

पर्वतो निर्वह्निर्धूमो वह्नेरभिधेयत्वं वा मेयत्वस्य व्यभिचारी-त्यादिभ्रमादनुमितिप्रतिबन्धादाह यथार्थेति।

## जागदीशी

**पर्वतो निर्वह्निरित्यादिभ्रमादिति योजना। धूमो वह्नेर्व्यभिचारीत्यन्वयः। यथार्थेति,—न च पर्वतो निर्वह्निरित्यादिज्ञानस्यापि अंशतो यथार्थत्वात्**

### तात्पर्यदीपिका

व्याप्त्यादिज्ञानेनान्यथासिद्धत्वमिति वाच्यम्, मध्यस्थस्य सन्दिग्धकारणताकपदार्थस्याप्यन्य-थासिद्धत्वस्वीकारात्। अनुगतरूपेणाभावविशिष्टान्यत्वं ज्ञाने निवेश्यम्, वैशिष्ट्यञ्च स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतावत्त्व - स्वप्रतियोगिमत्त्वोभयसम्बन्धेन। एतेना-प्रामाण्यज्ञानाभावस्याहार्यत्वाभावस्य चानुगमलाभः। स्वप्रतियोगिमत्त्वञ्च विशेष्यत्व-सामानाधिकरण्योभय-स्वरूपान्यतरसम्बन्धेन। स्वपदेनाप्रामाण्यग्रहाभावस्य परिग्रहः।

भ्रमविषयस्य च प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वाभावाद् भ्रमविषयविशिष्टस्याप्रसिद्धत्वादित्यर्थः।

अत्र प्रकृतपक्षविशेष्यकसाध्यव्याप्यहेतुप्रकारकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिनिश्चयविशिष्टान्यप्रकृतपक्षसाध्यहेतुकानुमितित्वव्यापकप्रतिबध्यताघटितलक्षणस्य विवक्षितत्वान्न स्वरूपासिद्ध्यादावव्याप्तिः, वैशिष्ट्यञ्च स्वसामानाधिकरण्यस्वाव्यवहितोत्तरत्वोभयसम्बन्धेनेति ध्येयम्।

## जागदीशी

तद्विषयेऽतिव्याप्तितादवस्थ्यमिति वाच्यम्, यथार्थपदेन भ्रमसामान्यभिन्नत्वस्य विवक्षितत्वादिति भावः।

## तात्पर्यदीपिका

पर्वतो वह्निमान्, प्रमेयमभिधेयत्वादित्यादिसद्धेतुमात्रस्थले पर्वतोवह्न्यभाववानित्याकारकबाधादिभ्रमविषयेऽतिव्याप्तिवारकतया यथार्थपदं सार्थकयति पर्वतो निर्वह्निरिति। अत्र स्थलान्तरानुसरणेन—पक्षे साध्याभावरूपबाधविषयकस्य प्रथमभ्रमस्यानुमितिविरोधित्वम्, साध्याभाववति हेतोर्भावरूपव्यभिचारविषयकस्य द्वितीयभ्रमस्य व्याप्तिज्ञानविरोधित्वम्, प्रतियोगित्वसम्बन्धेन घटाभावे प्रमेयत्वविषयकस्य च तृतीयभ्रमस्यापि व्यभिचारविषयकत्वेन व्याप्तिज्ञानविरोधित्वमिति भ्रमत्रयप्रदर्शनप्रकारोपन्यासः शिष्यबुद्धिवैशद्यार्थक एवेति मन्तव्यम्। भ्रमादिति पञ्चम्यर्थः प्रयुक्तत्वम्, तस्य प्रतिबन्धपदार्थे अनुत्पादेऽन्वयः।

न च केवलान्वयिसाध्यकेऽप्रसिद्ध्या साध्याभाववदवृत्तित्वरूपा व्याप्तिर्न दोषलक्षणघटकानुमितौ निवेश्या, तत्र हेतुव्यापकसाध्यसामानाधिकरण्यरूपाया व्याप्तेर्निवेश्यत्वादभिधेयत्वं मेयत्वव्यभिचारीत्यत्र तादृशसाध्याभाववद्वृत्तित्वरूपव्यभिचारस्यानुपयोगितया तत्र तन्निवेशप्रयासो व्यर्थ इति वाच्यम्, साध्याभाववदवृत्तित्वरूपव्याप्तिघटकत्वमतेनास्य ग्रन्थस्योपस्थापितत्वाद् भ्रमात्मकसमूहालम्बनानुमितिमादाय दोषलक्षणस्योन्नेयत्वादिति भावः।

भ्रमसामान्येति स्वानधिकरणवृत्तित्व-स्वनिष्ठविषयतानिरूपितत्वोभयसम्बन्धेन स्वविशिष्ट-

## दीधितिः

ननु प्रतिबन्धकज्ञानविषयव्यभिचारादिघटकसाध्यादेरपि

प्रत्येकं हेत्वाभासत्वापत्तिः। अथ विशिष्टविषयकं ज्ञानं प्रतिबन्धकम्,

### जागदीशी

साध्यादिघटितव्यभिचारस्य हेत्वाभासपदवाच्यत्वे साध्यादेरपि तत्त्वमिष्टमेवेत्यतः प्रत्येकमित्युक्तम्। ननु यादृशविशिष्टविषयकत्वेनानुमितिप्रतिबन्धकत्वं यथार्थज्ञानविषयीभूतं तादृशविशिष्टत्वं विवक्षितमतः साध्यादौ

### तात्पर्यदीपिका

विशेष्यत्वानिरूपकत्वम् ईश्वरज्ञानावृत्तिविषयताशून्यत्वं वा तत्त्वम्। स्वपदश्चात्र साध्याभावादिपरम्।

प्रथमलक्षणे यथार्थपदेन सद्धेतुस्थलेऽनुमितिविरोधिभ्रमविषयसाध्याभावादावतिव्याप्तिवारणेऽपि असद्धेतुस्थले ह्रदो वह्न्यभाववानितिप्रमाविषयदोषघटकसाध्यादेः प्रत्येकं तदनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वाद् दोषत्वापत्तिर्दुष्परिहरैव; दोषघटकसाध्यादावतिव्याप्तिवारणार्थं यदि यद्रूपावच्छिन्नविषयिता प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्तिस्तद्रूपवत्त्वमित्यादिकं निवेश्येत, तदा भ्रमसामान्यमादायातिव्याप्तिवारणं सम्भवत्येव, सुतरां यथार्थपदं व्यर्थमिति यथार्थपदाघटितलक्षणान्तरानुसरणे भूमिकामाह दीधितिकारो नन्विति। विशिष्टविषयकमिति साध्याभाववद्वृत्तित्वविशिष्टसाधनादिविषयकं ज्ञानं प्रतिबन्धकं, न तादृशविशिष्टघटकप्रत्येकसाध्यादिपदार्थविषयकं ज्ञानं, तत्र प्रत्येकसाध्यादिविषयतायाः तादृशविशिष्टनिरूपितत्वाभावादित्यर्थः। प्रत्येकपदार्थविषयकत्वस्य प्रतिबन्धकताया अतिरिक्तवृत्तित्वादिति भावः।

### दीधितिः

तद्घटकं च न विशिष्टमिति चेत् तर्हि यथार्थेति व्यर्थम्। भ्रमविषयविशिष्टस्याप्रसिद्धत्वादित्याशयेनाह यदिति।

### जागदीशी

नातिव्याप्तिरित्याशयेन शङ्कते-अथेति। तद्घटकं चेति व्यभिचारादिघटकीभूतसाध्यादिकं चेत्यर्थः। न विशिष्टं न प्रतिबन्धकतावच्छेदकीभूतविशिष्टस्वरूपमित्यर्थः। अप्रसिद्धत्वादिति भ्रमविषय-खण्डशःपदार्थविषयकत्वस्य विवक्षणीय-

### तात्पर्यदीपिका

यादृशविशिष्टविषयकत्वेनेत्यादिजगदीशग्रन्थस्य यद्रूपावच्छिन्नविशिष्टविषयकत्वावच्छिन्नानुमितिप्रतिबन्धकत्वं यथार्थज्ञानविषयीभूततद्रूपावच्छिन्नविशिष्टत्वमित्यर्थः। विशिष्टविषयकत्वावच्छिन्ने इत्यत्रावच्छेदकत्वं यदि स्वरूपसम्बन्धात्मकं स्यात्, तर्ह्येकदेशे (वह्नित्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नप्रकारताकह्रदत्वावच्छिन्नविशेष्यताकज्ञानस्य प्रतिबन्धकतया तस्यापि वह्नित्वावच्छिन्नत्वात् तद्रूपावच्छिन्नविशिष्टपदेन प्रतियोगित्वसम्बन्धेन वह्नित्वावच्छिन्नविशिष्टाभावे) अतिव्याप्तिः। अत एवानतिरिक्तवृत्तित्वरूपावच्छेदकत्वं वाच्यं, तथा च यद्रूपावच्छिन्नविशिष्टविषयकत्वस्य व्यापकमनुमितिप्रतिबन्धकत्वं यथार्थज्ञानविषयीभूत-तद्रूपावच्छिन्नविशिष्टत्वमित्यर्थः।

तर्हि यथार्थेति व्यर्थमिति दीधितिग्रन्थे व्यर्थपदं निष्प्रयोजनपरं वक्तव्यम्, स्वसमानाधिकरण-प्रकृतसाध्यव्याप्यतावच्छेदक-धर्मान्तरघटितत्वरूपव्यर्थत्वस्यासम्भवात्। ननु यथार्थ-

### तत्त्वचिन्तामणिः

## यद्विषयत्वेन लिङ्गज्ञानस्यानुमितिप्रतिबन्धकत्वम्,

### दीधितिः

## केचित्तु दुष्टानामेव हेतूनामेतानि लक्षणानि, तत्र तृतीयमिव

### जागदीशी

**प्रतिबन्धकतानतिरिक्तवृत्तित्वाभावात्। यथार्थपदं प्रकारान्तरेण सार्थकं**

### तात्पर्यदीपिका

पदस्य प्रयोजनमस्ति, अन्यथा संशयेऽपि यद्रूपावच्छिन्नविशिष्टविषयकत्वस्य सत्त्वात् तत्र च प्रतिबन्धकत्वाभावाद् व्यापकत्वं न स्यादित्यतः संशयान्यत्वं यद्रूपावच्छिन्नविशिष्टविषयकज्ञाने त्वयापि विशेषणं देयमिति यदि ब्रूयात्, तर्हि भवतापि ज्ञानेऽप्रामाण्यग्रहानास्कन्दितत्वमनाहार्यत्वञ्च विशेषणमसम्भववारणाय दातव्यमेव, ह्रदो वह्निमानिति ज्ञानोत्तरजातवह्न्यभाववान् ह्रद इत्याकारकप्रमाहार्यज्ञानीयविषयतायाः प्रतिबन्धकतातिरिक्तवृत्तित्वात्। मया तु भ्रमसाधारणमनुगतरूपेण वक्तव्यमिति यथार्थपदं निष्प्रयोजनम्। संशयसाधारणानुगमस्तु अभावविशिष्टान्यत्वं ; वैशिष्ट्यञ्च स्वावच्छिन्नप्रतिबन्धकतावच्छेदकविषयतावत्त्व—स्वप्रतियोगि

मत्त्वोभयसम्बन्धेन। प्रतियोगिमत्त्वञ्च विशेष्यत्वसामानाधिकरण्योभय-स्वरूपान्यतरसम्बन्धेन। ( स्वविरोधिधर्मधर्मितावच्छेदकक-स्वप्रकारकज्ञानत्वं नियताहार्यत्वमित्यपि ज्ञातव्यम् )।

भ्रमविषयविशिष्टस्येतिदीधितिग्रन्थे भ्रमविषये तदभाववति तत्प्रकारकभ्रमविषये विशिष्टस्य तत्प्रकारकवैशिष्ट्यस्याप्रसिद्धत्वादिति न भ्रमविषयविशिष्टेऽतिव्याप्तिरिति भावः।

केचित्तु दुष्टानामिति दुष्टनिरूपणस्यैव प्रतिज्ञातत्वादिति भावः।

## दीधितिः

प्रथममपि ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य। तदर्थश्च तादृशाभावप्रतियोगिनो ये व्यभिचारादयस्तत्प्रकारकयथार्थज्ञान-विषयत्वम्।

## जागदीशी

कुर्वतां मिश्राणां मतमाह—केचित्त्विति। नन्वेवं बाधितेऽव्याप्तिरित्यत आह तत्रेति। तृतीयमिवेति-ज्ञायमानं सदित्यादिकमित्यर्थः। ज्ञायमानव्यभिचारादेरिति साधनधर्मिकज्ञानीयप्रकारत्वविशिष्टसाध्याभाववद्वृत्तित्वादेरित्यर्थः। यद्यपि अनु-मितिकारणीभूताभावप्रतियोगि यत्रेति व्युत्पत्त्याऽनुमितिकारणीभूताभाव-प्रतियोगिज्ञानप्रकारीभूतव्यभिचारादेर्लाभसम्भवात् ज्ञायमानस्य व्यभिचारादेः प्रतिबन्धकत्वाभ्युपगमो न युक्तस्तथापि व्यधिकरणबहुव्रीहेः प्रयोगानुसारितया सर्वेत्राव्युत्पन्नत्वादिदमुक्तम्। नन्वेतावता कथमव्याप्तिनिरास इत्यत आह—

## तात्पर्यदीपिका

बाधित इति बाधविशिष्टहेतौ, अव्याप्तिरिति हेत्वनवगाहित्वादित्यर्थः। तत्रेति तेषु लक्षणेषु मध्ये इत्यर्थः। तृतीयमिवेति तृतीयलक्षणस्य—सर्वमत एव ज्ञायमानदोषप्रति-बन्धकतामताभिप्रायकतया दृष्टान्तत्वेनोपन्यासः। ज्ञायमानव्यभिचारादेरिति दीधितिः।—कालिकसम्बन्धेन ज्ञेयत्व ( ज्ञानविषयत्व ) विशिष्टह्रदो वह्न्यभाववानिति बाधस्य प्रतिबन्धकत्वम्। तत्पुरुषज्ञानीयवह्नित्वावच्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वा-भिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविशेष्यतावत्त्वं दोषत्वम्। जगदीशमते प्रकारताविशेष्यतयो-रभिन्नत्वाभ्युपगमादिति भावः।

यादृशसम्बन्धेन ज्ञायमानस्य प्रतिबन्धकत्वमित्यादीनामयमर्थः। यत्किञ्चिद्धर्मावच्छिन्न-विशेष्यतानिरूपितयद्धर्मावच्छिन्नयत्सम्बन्धावच्छिन्नप्रकारतात्वव्यापकं ज्ञानवैशिष्ट्यानवच्छिन्न-

## दीधितिः

अग्रे च तत्त्वमित्यस्य तद्धत्त्वमित्यर्थः। आद्यस्यैव वा दुष्टहेतुलक्षणत्वमिति प्राहुः।

## जागदीशी।

तदर्थश्चेति—प्रथमलक्षणार्थश्चेत्यर्थः। तादृशाभावेति—अनुमितिकारणीभूताभावेत्यर्थः। व्यभिचारादय इति फलितार्थकथनं तादूरूप्येणाप्रवेशात्। तत्प्रकारकेति—एतन्मते साध्याभाववद्वृत्तित्वं व्यभिचारः। तथा च वाच्यं प्रमेयत्वादित्यादिसद्धेतोरनुमितिविरोधिनः साध्यासामानाधिकरण्यस्य भ्रमविशेष्यतामादाय प्रमेयत्वादिसद्धेतावतिव्याप्तिवारणाय यथार्थपदम्। न चैवमपि निर्वह्निवृत्तित्वादेः कालिकादिसम्बन्धेन यथार्थज्ञानमादाय सद्धेतावतिव्याप्तितादवस्थ्यम्, यादृशसम्बन्धेन ज्ञायमानस्य प्रतिबन्धकत्वं, तादृशसम्बन्धेन तत्प्रकारकयथार्थज्ञानस्योक्तत्वात्। न च ह्रदो धूमत्ववान् धूमादित्यत्र

## तात्पर्यदीपिका

तादृशानुमितिप्रतिबन्धकतावच्छेदकत्वं तद्रूपावच्छिन्नतत्सम्बन्धावच्छिन्नप्रकारतानिरूपितयथार्थज्ञानीयविशेष्यतावत्त्वम्। वृत्तिमान् वह्न्यभाववानितिज्ञानकालीन-वृत्तिमान् पर्वत इत्यत्रापि वृत्तित्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतासामान्यस्य वह्न्यनुमितिप्रतिबन्धकतावच्छेदकतया तद्रूपावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपितयथार्थज्ञानीयविशेष्यत्वस्य धूमे सत्त्वेन वह्निमान् धूमाद् इत्यत्रातिव्याप्तिवारणार्थं प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्व-विशेषणम्। न चैवमपि धूमत्ववत्पर्वतो वह्निमानित्यत्र धूमत्वाभाववत् पर्वतरूपाश्रयासिद्धिमादाय धूमादिहेतौ दुष्टत्वव्यवहारानुपपत्तिः। धूमत्वाभावत्वावच्छिन्न-स्वरूपसम्बन्धा-

## जागदीशी

बाधितद्धेतावव्याप्तिः, पक्षे धूमत्वाभावस्वरूपस्य बाधस्य धूमहेतौ स्वरूपसम्बन्धेन यथार्थज्ञानासम्भवादिति वाच्यम्, साधननिष्ठव्यभिचारादेर्यथार्थज्ञानमादायैव

**तत्र लक्षणसङ्गमनादिति भावः। ननु दुष्टहेतोरेव लक्ष्यत्वे द्वितीयादिनिरुक्तेस्तत्राव्याप्तिर्दोषोऽतिव्याप्तिश्चेत्यत आह—अग्रे चेति।**

तात्पर्यदीपिका

वच्छिन्नप्रकारता-निरूपित-यथार्थज्ञानीयविशेष्यतावत्त्वस्य धूमेऽसत्त्वादिति वाच्यम्, धूमत्वं पर्वतासमवेतमित्यस्यापि प्रतिबन्धकतया पर्वतासमवेतत्वत्वावच्छिन्नप्रकारतानिरूपितयथार्थज्ञानीयविशेष्यत्वस्य धूमे सत्त्वात्। एवं रूपत्ववत्पर्वतो वह्निमान् पर्वतीयरूपादित्यादावुक्तरीत्या दुष्टत्वव्यवहारानुपपत्तिवारणं रूपत्वस्य न पर्वतवृत्तित्वम् (पर्वतवृत्तित्वं रूपत्ववृत्तित्वाभाववत्) इत्येवमाश्रयासिद्धिमादाय सङ्गमनीयम्। (वृत्तित्वं समवायसम्बन्धावच्छिन्नं) पर्वतवृत्तित्वे रूपत्वनिष्ठत्वाभावात् तस्य रूपत्वनिष्ठत्वाभावस्य रूपे सत्त्वादिति। तत्रेति बाधितहेतावव्याप्तिरिति भावः।

साधनवन्निष्ठव्यभिचारादेरिति धूमत्वाभावाधिकरणे पर्वते धूमस्य वर्तमानत्वाद्व्यभिचार इति भावः। अग्रे चेति—द्वितीय-तृतीयलक्षणयोरित्यर्थः। तद्वत्त्वमिति दोषवत्त्वमित्यर्थः। आद्यस्येति—प्रथममात्रस्य दुष्टहेतुलक्षणत्वेनैवोपपत्तौ द्वितीय-तृतीययोर्दोषलक्षणत्वमेवोचितम्, तत्त्वमितिमूलस्य यथाश्रुतार्थकत्वानुरोधादिति भावः। प्राहुरित्यनेनेदृशव्याख्याया निर्दोषत्वं सूचितम्।

केचिदित्युक्त्याऽस्वरसः सूचित इति। ननु सामानाधिकरण्येनानुमितिं प्रति पर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धेनैव वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितपर्वत-

जागदीशी

**उपधेयसङ्करेऽपीत्यादिग्रन्थासङ्गतेर्लक्षणापत्तेराह-आद्यस्यैव वेति। तथा च अग्रिमलक्षणमभिप्रेत्य उपधेयेत्यादिग्रन्थ इति भावः। प्राहुरिति, यथार्थपदसार्थक्यमेवात्र प्रकर्षः। पक्षवृत्तितया ज्ञायमानस्य वह्न्यभावरूपबाधस्य स्वरूपसम्बन्धेनैव यद् यथार्थज्ञानं तद्विषयत्वस्यैव धूमादौ सत्त्वात् पर्वतो वह्निमान् धूमादित्यादावतिव्याप्तिरित्यस्वरसः केचिदित्युक्त्या सूचितः। स्वलिङ्गकानुमितिकारणीभूताभावप्रतियोगियथार्थज्ञानविषयत्वमेवार्थः, सर्वत्रैव दुष्टहेतावन्ततो नित्यज्ञानविषयतामादायैव लक्षणसम्भवात्। तथा चानुमितिप्रतिबन्धकीभूतव्यभिचारादिभ्रमविषयतामादायैव सद्धेतावतिप्रसङ्गवारणाय भ्रमसामान्यभिन्नार्थकं यथार्थपदमावश्यकमिति युक्तमुत्पश्यामः।**

तात्पर्यदीपिका

त्वावच्छिन्नविशेष्यताशालिग्रहस्य प्रतिबन्धकतया तत्र निरुक्तसम्बन्धावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितयथार्थज्ञानीयविशेष्यत्वस्य धूमेऽसत्त्वेन कथं जगदीशोक्ताखरसोक्तिः सङ्गच्छत इति चेत्, न, वह्न्यभावव्याप्यपर्वतत्वप्रतियोगिक-समवायसम्बन्धेन पर्वतत्ववति स्वरूपसम्बन्धेनैव वह्न्यभावस्य ज्ञानमपि अवच्छेदावच्छेदेन बाधनिश्चयः, तथा च शुद्धस्वरूपेणैव वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितयथार्थज्ञानीयविशेष्यत्वस्य धूमे सत्त्वेन जगदीशप्रदर्शिताखरसस्य सम्यक्त्वम्। नित्यज्ञानविषयतेतिः, ईश्वरीयज्ञानविषयतेत्यर्थः, तादृशविषयतायाः सर्वांशे भ्रमशून्यत्वादिति भावः। यथार्थज्ञानपदेन संसर्गविशिष्टाऽन्यप्रकारता-

## दीधितिः

### लिङ्गमविवक्षितम्। यद्विषयकत्वेन यादृशविशिष्टविषयकत्वेन।

## जागदीशी

**लिङ्गपदस्य निष्प्रयोजनकत्वादाह लिङ्गमिति, ज्ञानपदप्रयोजनं त्वग्रे वक्ष्यामः।**

तात्पर्यदीपिका।

वदन्यज्ञानत्वं विवक्षितम्, संसर्गवैशिष्ट्यञ्च स्वप्रतियोगिनिष्ठत्व-स्वावच्छिन्नत्व-स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वैतत्त्रितयसम्बन्धेन। समवायसम्बन्धेन पर्वतो वह्निमानितिभ्रमवारणाय स्वावच्छिन्नत्वनिवेशः। संयोगेन वह्न्यभाववान् पर्वत इति भ्रमवारणाय स्वप्रतियोगिनिष्ठत्वदलम्। संयोगेन घटवान् गुण इति भ्रमवारणाय स्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वदलम्। स्वं संसर्गः।

**यद्विषयकत्वेन लिङ्गज्ञानस्येति मूलम्**। यत्पदेन दोषरूपविषयो धर्तव्यः। यो विषयो यत्रेति यद्विषयकं, तस्य भावो यद्विषयकत्वं, तेन यद्विषयकत्वेन। लिङ्गस्य ज्ञानमिति षष्ठ्यर्थो विषयता; निष्ठत्वं संसर्गः; तेन लिङ्गनिष्ठा या ज्ञानविषयता तन्निरूपिता यद्विषयिता (ज्ञाननिष्ठा) प्रकृतानुमितेः प्रतिबन्धकतेत्यादि। तथा च लिङ्गज्ञानवृत्तियन्निष्ठविषयतानिरूपितविषयित्वं प्रकृतसमूहालम्बनानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं (यद्विषयकत्वेनेत्यत्र तृतीयाया अवच्छेदकत्वार्थत्वात्) तत्त्वं हेत्वाभासत्वमिति द्वितीयं लक्षणं फलितम्। यद्विषयकेति धूमाभाववद्वृत्तिवह्न्यादिरूपा विषयाः, तादृशं

ज्ञानं धूमाभाववद्वृत्तिर्वह्निरित्यादिरूपम्। बाधनिश्चयस्य लिङ्गाविषयकत्वेन समूहालम्बनज्ञानमादाय लक्षणसमन्वयः।

अविवक्षितमित्यस्य निष्प्रयोजनकमर्थः। निष्प्रयोजनकत्वं च फलाऽनुत्पादप्रयुक्तेच्छाविषयत्वाभावः।

न च लिङ्गाज्ज्ञानं लिङ्गज्ञानमिति पञ्चमीतत्पुरुषेण लिङ्गजन्यज्ञानमनुमितिमादाय सर्वत्र लक्षणसमन्वयसम्भवादनाहार्य्यत्वसंशयान्यत्वयोरप्रवेशेन लाघवमेव प्रयोजनमस्तीति वाच्यम्, अनुमितेर्लिङ्गजन्यत्वाभावात् स्वज्ञानजन्यत्वरूपपञ्चम्यर्थस्याननुभविकत्वाच्च। अथवा यादृशाङ्कुरविशेषे दोषविषयकानुमितेरप्रसिद्धिस्तादृशस्थलीयदोषेऽव्याप्तिभियैवानुमितिग्राहकलिङ्गपदस्य निष्प्रयोजनकत्वाभिधानस्य सम्यक्त्वम्। ननु लिङ्गपदस्य निवेशनीयत्वे यत्र वह्निमद्ह्रदकालीनवह्नेः साध्यत्वं वह्निमद्ह्रदकालीनधूमस्य हेतुत्वं ह्रदस्य च पक्षत्वं तत्र वह्न्यभाववद्ह्रदरूपसाध्याप्रसिद्ध्याद्यात्मकदोषे वह्निमान् वह्निव्याप्यवद्ह्रदादित्यत्र च वह्न्यभाववद्ह्रदरूपदोषेऽव्याप्त्यापत्तिः, निरुक्तदोषविषयकलिङ्गविषयकनिश्चयस्य नियतमेवाहार्य्यत्वेनाप्रतिबन्धकत्वात्। अतिव्याप्तिश्च ह्रदो वह्निमान् जलवद्ध्रदकालीनधूमादित्यादौ वह्न्यभाववज्जलवति, जलावच्छेदेन वह्न्यभाववत्ताज्ञानकालीन-जलवद्ध्रदकालीनधूमविषयकज्ञानस्यापि पक्षे वह्न्यनुमितेः प्रतिबन्धकत्वात्। अत एव दोषसम्भवादेव तन्निवेशासम्भवात् कथमुक्तं निष्प्रयोजनकत्वादिति? सत्यं लिङ्गज्ञानमित्यत्र लिङ्गतावच्छेदकावच्छिन्नविषयताकत्वमनिवेश्य लिङ्गनिष्ठविशेष्यताकत्वस्यैव निवेश्यत्वाद् वह्न्यभाववद्ध्रदत्वेन लिङ्गावगाहिज्ञानमादाय लक्षणसमन्वयात्।

## दीधितिः

तेनानुमितिप्रतिबन्धकपक्षविशेष्यकभ्रमविषये साध्याभावादौ सद्धेत्वादिनिष्ठे नातिप्रसङ्गः। अवच्छेदकत्वं चेहानतिरिक्त-

## जागदीशी

ननु यत्पदस्याखण्डव्यक्तिवाचकतया ह्रदो वह्निमान् धूमादित्यादौ साध्यादिशून्यस्यापि केवलस्य पक्षादेर्दोषत्वं स्यात् तन्निष्ठस्यापि बाधनिश्चयविषयत्वस्यानुमितिप्रतिबन्धकतावच्छेदकत्वादतो व्याचष्टे यादृशेति, यादृशधर्मवन्निष्ठतत्तद्विशिष्टनिरूपितविषयकत्वेनेत्यर्थः। विशिष्टपदस्य फलमाह तेनेति। सद्धेत्वादिनिष्ठ इति—तादृशस्य दोषत्वे तेनैव दोषेण हेतोर्दुष्टत्व-

प्रसञ्जनार्थमुक्तम्। आदिनाऽसद्धेतुपरिग्रहः। नातिप्रसङ्ग इति—साध्याभावनिष्ठायाः साध्यीयत्वविशिष्टाभावविषयताया अनुमितिप्रतिबन्धकतानवच्छेदकत्वादिति भावः। नन्वेवमप्यसम्भवः, ह्रदत्वेन नद्यां वह्न्यभावत्वेन

तात्पर्यदीपिका

तेनेति दीधितिः—अत्र यत्सम्बन्धेन यन्निष्ठप्रकारताकत्वेनानुमितिप्रतिबन्धकत्वं तत्सम्बन्धेन तद्वत्त्वस्य दुष्टताव्यवहारनियामकत्वोपगमे पक्षविशेषणकभ्रमविषयपर्वतस्य स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन धूमवृत्तित्वाभावात् प्रसिद्धवह्निमान् धूमादित्यादौ दुष्टत्वव्यवहारापत्तिर्न सम्भवतीति पक्षविशेष्यकेत्युक्तम्। साध्याभावादावित्यादिना केवलपक्षाद्येकदेशपरिग्रहः। अत्र भ्रमपदस्य भ्रमप्रमासामान्यपरत्वम्, आदिना असद्धेतुपरिग्रह इति जगदीशव्याख्यानात् सूचितम्। असद्धेतुस्थले ह्रदो वह्न्यभाववानिति पक्षविशेष्यकानुमितिप्रतिबन्धकज्ञानविषये वह्न्यभावे पक्षविशेषणकभ्रमविषयीभूतबाधस्य प्रसिद्धधूमादिसद्धेतुनिष्ठत्वाभावात् तमादाय न तत्र दुष्टत्वसम्भवः। पर्वतो वह्निमान् धूमादित्यादौपर्वतत्वव्यापकवह्न्यभावप्रतियोगिकस्वरूपसम्बन्धावच्छिन्नाधेयत्वसम्बन्धेन धूमे पर्वतस्यावृत्तित्वान्नातिप्रसङ्गः। पर्वतो वह्न्यभाववानिति-पक्षविशेष्यकभ्रमविषये वह्न्यभावस्य स्वरूपेण धूमवृत्तित्वादतिप्रसङ्गः। अवच्छेदावच्छेदेन साध्यतास्थले सामानाधिकरण्येन प्रमाविषयीभूत बाधस्य दोषतया हेतुनिष्ठत्वस्य तत्रेष्टापत्तिः कर्तुं शक्यते इत्यतः सद्धेत्वादिनिष्ठेति। पक्षविशेषणकभ्रमस्थले पक्षतावच्छेदकस्य प्रकारतावच्छेदकत्वं वह्न्यभावव्याप्यपर्वतत्वप्रतियोगिकसमवायेनेत्युक्तावपि स्वरूपसम्बन्धावच्छिन्नाधेयतासम्बन्धेन धूमे पर्वतस्यावृत्तित्वान्न दुष्टत्वं स्यात्।

यादृशधर्मवन्निष्ठेत्यादिजगदीशव्याख्याने यद्रूपावच्छिन्नविशिष्टविषयताकत्वं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वपर्य्याप्त्यधिकरणं तद्रूपावच्छिन्नविशिष्टत्वं दोषत्वमित्यर्थो नोपादेयः। भ्रमज्ञाने वह्न्याद्यभावविशिष्टपर्वतादेर्विषयितासम्बन्धेनासत्त्वात् तस्याप्रतिबन्धकत्वात् तादृशविशिष्टविषयित्वस्य प्रतिबन्धकतावच्छेदकत्वपर्य्याप्त्यधिकरणत्वविरहात्। ननु यद्रूपविशिष्टविषयताशालिनिश्चयावृत्तिः प्रकृतानुमितिप्रतिबन्धकत्वाभाव इति कुतो नोक्तमिति चेन्न, अधिकरणभेदेनाभावानां भेदाद् यत्किञ्चिद्घटादिनिश्चयवृत्तिप्रतिबन्धकत्वाभावस्यानाहार्य्याप्रामाण्यग्रहानास्कन्दितह्रदत्वाद्यवच्छिन्ननिश्चयेऽसत्त्वेनाऽतिप्रसङ्गात्। न चैवमपि प्रकृतानुमिति प्रतिबन्धकताभावत्वं यादृशनिश्चयवृत्तितानवच्छेदकमित्येवोच्यतां, किं गुरुतरनिवेशेनेति वाच्यम्, विशेष्यवृत्तिपदार्थस्य विशिष्टानुयोगिताकाभावानभ्युपगमे शुद्धाभावत्वे तादृशनिश्चयवृत्तिताव-

## दीधितिः

वृत्तित्वम्, तेन विशिष्टस्यासत्त्वेऽपि भ्रमात् प्रतिबन्धेऽपि न क्षतिः।

## जागदीशी

गुञ्जाद्यभावस्य निश्चये सत्यपि ह्रदो वह्निमानित्याद्यनुमितेरनुत्पत्त्या ह्रदत्वावच्छिन्नविशेष्यताकवह्न्यभावत्वावच्छिन्नप्रकारताकनिश्चयत्वादिनैव तादृशानुमितिप्रतिबन्धकतया वह्न्यभावविशिष्टह्रदादिविषयकत्वस्य प्रतिबन्धकतावच्छेदकत्वविरहादित्यत आह अवच्छेदकत्वमिति। तथा च यादृशधर्मवद्विशिष्टतद्विशिष्टधर्मनिरूपितविषयिताया अनुमितिप्रतिबन्धकतानतिरिक्तवृत्तित्वं, तादृशविशिष्टधर्मवान् हेतुदोष इत्यर्थः। तादृशधर्मश्च बाधादिस्थले वह्न्यभावविशिष्टह्रदादिरेवेति भावः। विशिष्टस्यासत्त्वेऽपीति — वह्न्यभावविशिष्टह्रदादेर्विषयिता-

## तात्पर्यदीपिका

च्छेदकत्वसत्त्वेन विशिष्टे तस्मिन् अनवच्छेदकत्वस्य दुर्घटत्वादसम्भवापत्तेः। ह्रदो वह्निमान् धूमादित्यत्र विशिष्टवह्न्यभाववद्ह्रदनिश्चयवृत्तिप्रतिबन्धकत्वाभावस्य कस्यचिदभावस्य स्वरूपत्वात् सोऽपि अभावत्वावच्छिन्नः विशिष्टाभावस्यानतिरेकात् प्रतिबन्धकत्वाभावत्वावच्छिन्न इति। अथ प्रकृतानुमितिप्रतिबन्धकतायां तादृशनिश्चयत्वव्यापकत्वनिवेशापेक्षया लाघवाद् यद्रूपावच्छिन्नविषयकनिश्चयत्वं प्रकृतानुमित्यवृत्ति, अथवा प्रकृतानुमिति-प्राक्क्षणावृत्त्यवृत्ति-इत्येव निवेश्यताम्, अनुमितिप्राक्क्षणवृत्तित्वं च स्ववृत्तित्व-स्ववृत्तिध्वंसप्रतियोगिकालवृत्तित्वोभयसम्बन्धेनानुमितिविशिष्टत्वमिति चेन्न, आद्ये वह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतेऽतिव्याप्तिः, वह्न्यभावव्याप्यवत्तानिश्चयसत्त्वे वह्निमत्तानिश्चयाभावात्, वह्न्यभावव्याप्यनिश्चयस्य प्रतिबन्धकत्वात्। व्यापकत्वनिवेशे तु वह्निमत्त्वनिश्चयस्य प्रतिबन्धकत्वाभावान्नातिव्याप्तिः। द्वितीये ह्रदो वह्निमान् जलवद्ह्रदादित्यत्र वह्न्यभाववज्जलवति चातिव्याप्तिः, तदभावावच्छेकरूपेण धर्मग्रहस्यापि तद्वत्ताबुद्धिविरोधितया जलवान् वह्न्यभाववानितिज्ञानात् परं जलवद्ह्रदरूपहेतुना समं ह्रदो वह्निमानितिसाध्यानुमितिसम्बन्धाभावादाहार्य्याकारत्वात्। न च यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमितिप्रतिबन्धकतावच्छेदकमित्युक्तौ वह्निमत्ताज्ञानप्रतिबन्धकीभूतस्य पाषाणमयत्ववान् वह्न्यभाववानितिज्ञानकालीन-'पाषाणमयत्ववान् पर्वत' इत्याकारकनिश्चयस्य विषये पाषाणमयत्ववत्पर्वतेऽतिव्याप्त्यापत्तिरिति वाच्यम्, जगदीशनये

एकत्र द्वयं-रीत्या भानानङ्गीकारेण विशेष्यविशेषणभावेनाप्रामाण्यज्ञानव्यक्तीनामुत्तेजकविधया प्रवेशेऽनन्तकार्य्यकारणभावप्रसक्तिः, अतोऽनुगतेन तत्तद्व्यक्तित्वरूपेणाप्रामाण्यज्ञानानामुत्तेजकत्वार्थं ज्ञानविशिष्टज्ञानत्वेनैकरूपेण प्रतिवन्धकत्वस्य कल्पयितुमशक्यत्वात्।

नन्वेवं साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्येऽव्याप्तिः, तस्य ज्ञानवैशिष्ट्यानवच्छिन्न-प्रतिवन्धकत्वाप्रसिद्धेः, निश्चयत्वनिवेशेऽपि साध्यव्यापकीभूताभावप्रतियोगिजलमित्याकारकासाधारण्यनिश्चये प्रतिवन्धकत्वविरहादिति चेत्, सत्यं, प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वासाधारण्यविषयतानवच्छिन्नत्वोभयाभाववत्तानिवेशादेव तद्वारणं सम्भवति, तदीयप्रतिवन्धकतायां ज्ञानवैशिष्ट्यावच्छिन्नत्वेऽपि असाधारण्यविषयतानवच्छिन्नत्वविरहादुभयाभाववत्ताऽक्षतेः। तन्मतेऽपि असाधारण्ये तादृशनिश्चयत्वव्यापकप्रतिवन्धकत्वस्य तादृशनिश्चयत्वव्यापकप्रकृतानुमित्यप्रतिबन्धकत्वासाधारण्यविषयताशून्यत्वोभयव्यतिरेक इत्यर्थकत्वावश्यकत्वात्। तथा चासाधारण्यनिश्चयेऽनुमित्यप्रतिबन्धकत्वसत्त्वेऽपि असाधारण्यविषयताशून्यत्वाभावादुभयाभाव इति तत्र नाव्याप्तिरिति भावः।

अपि च वह्निमान् ह्रद इत्यनुमितिप्रतिबन्धकं वह्न्यभाववान् ह्रद इति वह्न्यभावत्वावच्छिन्नप्रकारकह्रदत्वावच्छिन्नविशेष्यकज्ञानम्, अर्थात् यद्रूपावच्छिन्नवन्निष्ठतद्रूपावच्छिन्ननिरूपितविषयताया अनुमितिप्रतिवन्धकतानतिरिक्तवृत्तित्वं तद्रूपावच्छिन्नवान् हेतुदोषः। वह्निमान् ह्रद इत्यनुमितिप्रतिबन्धकं वह्न्यभाववान् ह्रद इति ज्ञानम्, अतस्थ-वह्न्यभावत्वावच्छिन्नप्रकारताकह्रदत्वावच्छिन्नविशेष्यताकत्वस्य जातिमान् वह्न्यभाववानिति ज्ञाने सत्त्वात्, जातित्वेन ह्रदत्वज्ञाने प्रतिवन्धकत्वस्यासत्त्वाद् व्यापकत्वमसम्भवं, जातिमान् वह्न्यभाववानितिज्ञाने वह्न्यभावत्वावच्छिन्नविशिष्टजातित्वावच्छिन्नह्रदत्वनिरूपितविषयितायाः सत्त्वात् तत्र च प्रतिवन्धकत्वासत्त्वाद् व्यापकत्वमसम्भवम्, अत एव यादृशविशिष्टधर्मनिरूपित इत्याद्यनुक्त्वा यादृशधर्मवन्निष्ठ इत्याद्यतिरिक्तं निवेशितं पर्याप्तिनिवेशापेक्षया। पर्य्याप्तिनिवेशस्तु यादृशसमुदायत्ववृत्तिनिरूपकतानिरूपितविषयत्वव्यापिका प्रकृतानुमितिप्रतिबन्धकता तादृशसमुदायत्वावच्छिन्नत्वं दोषत्वम्। वृत्तित्वञ्च स्वावच्छेदकत्वात्वावच्छिन्नप्रतियोगिताकपर्य्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन। पूर्वोक्त - तत्तद्धर्मनिरूपितत्वनिवेशन्नह्मिन्नैवोक्तासम्भवादेतादृशगुरुतरनिवेशो वृथा, अत्र जातित्वेन ह्रदत्वज्ञानात् तत्र ह्रदत्वनिष्ठनिरवच्छिन्नधर्मितावच्छेदकतेत्यादिनिवेशात्। ननु तथापि यादृशधर्मवन्निष्ठतत्तद्विशिष्टधर्मेत्यादिलक्षणस्य वह्न्यभाववज्जलवत्कालीनजलवद्ह्रद इति ज्ञानस्य ह्रदो वह्निमानिति ज्ञानस्य प्रतिवन्धकतयाऽतिव्याप्तिरिति चेन्न, जगदीशमते एकत्रद्वयं-रीत्या भानानङ्गीकारादित्याद्युक्तमेव प्राक्। तथा च तद-

प्रामाण्यविशिष्टैतदप्रामाण्यविशिष्टापराप्रामाण्यविशिष्टतदप्रामाण्यस्यैवं प्रकारेणाप्रामाण्यज्ञानानामुत्तेजकत्वकल्पनेऽनन्तकार्यकारणभावप्रसक्तिभिया लाघवात् तत्तदप्रामाण्यग्रहस्य तत्तत्प्रतिबन्धकं प्रति उत्तेजकत्वमिति विशिष्यैव वाच्यम्। एवं च वह्न्यभाववज्जलवद्ध्रद इति ज्ञानं वह्न्यभाववज्जलवत्कालीनजलवद्ध्रदत्वाभाववति वह्न्यभाववज्जलवद्ध्रदकालीनजलवद्ध्रदत्वप्रकारकमित्याद्यप्रामाण्यग्रहाणामुत्तेजककोटावप्रवेशात् तादृशविषयतायास्तादृशाप्रामाण्यग्रहास्कन्दितज्ञाने सत्त्वात् तत्र च प्रतिबन्धकत्वाभावान्नातिव्याप्तिः। अथवा अवच्छेदकधर्मवत्ताग्रहव्यावृत्तप्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकं यादृशविशिष्टविषयकत्वं तादृशविशिष्टत्वं हेतुदोषत्वमिति नातिव्याप्तिरिति भावः। प्रतिबन्धकतायाम् असाधारण्यप्रतिबन्धकताभिन्नत्वं निवेश्यम्।

## दीधितिः

**विशेषणीयं च तादृशविशिष्टान्तराऽघटितत्वेन, तेन प्रमेयत्वादिविशिष्टे सव्यभिचारादौ नातिप्रसङ्गः।**

### जागदीशी

सम्बन्धेनासत्त्वेऽपीत्यर्थः। भ्रमादिति—ह्रदत्वादिरूपेण घटादौ वह्न्यभावत्वेन गुणाद्यभावस्य भ्रमादित्यर्थः। न क्षतिः—नासम्भवः।

तादृशेति—स्वातिरिक्तं यादृशमनुमितिप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकं तादृशाघटितत्वेन निरुक्तविशिष्टं विशेषणीयमित्यर्थः। सव्यभिचारादेरपि अनुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयताकेन स्वेनैव घटितत्वादसम्भवः स्यादतः स्वातिरिक्तेति। प्रमेयत्वविशिष्टसव्यभिचारादिश्च स्वातिरिक्तेन सव्यभिचारादिनैव तादृशेन घटित इति न तत्रातिप्रसङ्गः।

### तात्पर्यदीपिका

**नासम्भव** इति,—अनतिरिक्तवृत्तित्वरूपावच्छेदकत्वविवक्षणे ह्रद इत्याकारकज्ञाने विशिष्टस्य शुद्धानतिरिक्ततया वह्न्यभावविशिष्टह्रदादिविषयकत्वस्य ह्रद इतिज्ञाने सत्त्वेऽपि वह्न्यभावविशिष्टह्रदत्वावच्छिन्नविषयिताया "वह्न्यभाववान् ह्रद" इति ज्ञान एव सत्त्वेन प्रतिबन्धकतानतिरिक्तवृत्तित्वान्नासम्भवः। न वा केवल-वह्न्यभावत्वावच्छिन्नविषयकत्वस्य प्रतिबन्धकतातिरिक्तवृत्तित्वादेकदेशेऽतिव्याप्तिरिति भावः। अनतिरिक्तवृत्तित्वञ्च स्वव्यापक-

तत्कत्वम्। स्वं विषयित्वं, स्वस्य विषयित्वस्य व्यापिका सा प्रतिबन्धकता यस्य तत् स्वव्यापकतत्कम्, तस्य भावः स्वव्यापकतत्कत्वमिति, यद्रूपावच्छिन्नविषयिताव्यापिका प्रतिबन्धकतेति फलितम्। यद्विषयकत्वेनेत्यत्रानतिरिक्तवृत्तित्वाख्यमवच्छेदकत्वं तृतीयार्थः, न तु स्वरूपसम्बन्धविशेषः, पक्षसाध्यादिविषयत्वञ्च न तथेति नातिप्रसङ्गः, साध्याभाव-

## जागदीशी

**स्वातिरिक्तत्वञ्च स्वानवच्छिन्नप्रकारतावच्छेदकत्वम्। तेन सव्यभिचारस्य प्रमेयत्वविशिष्टसव्यभिचाराभिन्नत्वेऽपि न क्षतिः; शुद्धसव्यभिचारस्य विशिष्ट-सव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकत्वेनैव तत्रातिप्रसङ्गभङ्गादिति भावः।**

## तात्पर्यदीपिका

विशिष्टपक्षादिविषयकत्वं तु तथेति तेषां दोषत्वम्। तथा च प्रतियोगित्वसम्बन्धावच्छिन्न-साध्यतावच्छेदकावच्छिन्नप्रकारतानिरूपितविशेष्यत्वाभिन्नाभावत्वावच्छिन्नप्रकारतानिरूपितपक्ष-तावच्छेदकावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकत्वं वाच्यं, जगदीशमते समानाधि-करणविषयतयोरभिन्नत्वादिति निष्कर्षः।

**स्वातिरिक्तत्वञ्चेति**—स्वानवच्छिन्नप्रकारतावच्छेदकत्वमिति, स्वनिष्ठविलक्षणावच्छेदकत्वा-निरूपकप्रकारतावच्छेदकत्वमित्यस्मदुपाध्यायसतीर्थपादाः। तद्घटितप्रकृतलक्षणनिष्कर्ष-स्तु—स्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपावृत्ति प्रकारतावच्छेदकयद्रूपावच्छिन्नविषयित्वव्यापकं प्रकृतानुमितिप्रतिबन्धकत्वं तद्रूपानवच्छिन्न-प्रकारतावच्छेदकयद्रूपावच्छिन्नविषयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नत्वं दोषत्वम्। वृत्तित्वञ्च स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्व-सम्बन्धेन। स्वातिरिक्तत्वं स्वानवच्छिन्नप्रकारतावच्छेदकत्वमित्युक्तेऽपि उभयत्रैकप्रतिबन्धकता-निवेशात् व्यभिचारत्वाद्यनवच्छिन्नप्रकारताया अवच्छेदकत्वस्य प्रमेयत्वविशिष्टव्यभिचारत्वादाव-सत्त्वादसम्भवः स्यात्, प्रमेयत्वविशिष्टव्यभिचारत्वावच्छिन्ना या प्रकारता सापि व्यभिचार-

## जागदीशी

**यद्यप्येवमपि प्रमेयत्वमवृत्तिप्रमेयत्वादित्यत्रावृत्तित्वाभावतद्वृत्तिप्रमेयत्व-रूपसव्यभिचारेऽव्याप्तिस्तस्य वृत्तिप्रमेयत्वरूपबाधात्मकेनैव तादृशधर्मान्त-रेण घटितत्वात् तथापि यादृशविशिष्टविषयकत्वं यत्पक्षहेतुसाध्यकानुमिति-**

तात्पर्यदीपिका

त्वावच्छिन्ना अतोऽसम्भववारणाय पूर्वोक्तपर्याप्तिनिवेशः। व्यभिचारत्वावच्छिन्नप्रकारतावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकरूपत्वेन प्रमेयत्वविशिष्टव्यभिचारत्वगतरूपं प्राप्तम्, तदवृत्तिप्रकारतावच्छेदकस्य व्यभिचारत्वस्य धर्तुमशक्यत्वादसम्भववारणाय वृत्तित्वं तादृशसम्बन्धेन निवेशितम्।

ननु व्यभिचारकालीनघटेऽतिव्याप्तिः; तादृशघटत्वावच्छिन्नप्रकारतावच्छेदकव्यभिचारत्वानवच्छिन्नप्रकारतावच्छेदकत्वस्य व्यभिचारकालीनघटत्वे सत्त्वादिति चेन्न उभयत्र विषयतानिष्ठावच्छेद्यत्वाभावस्यैव प्रकारतानवच्छेदकत्वपदेन विवक्षणीयतया व्यभिचारत्वावच्छेद्यत्वाभाववद्विषयतावच्छेदकत्वस्य तादृशघटत्वेऽसत्त्वेनातिप्रसङ्गानवकाशात्।

**यद्यप्येवमपीतिग्रन्थे यादृशविशिष्टविषयकत्वमित्यादि—न** चात्रैतादृशनिवेशेऽपि अवृत्तित्वाभाववद्वृत्तित्वत्वावच्छिन्नप्रकारताकप्रमेयत्वत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वव्यापकप्रतिबन्धकताया अपि वृत्तित्वत्वावच्छिन्नप्रकारताकप्रमेयत्वत्वावच्छिन्नविशेष्यताशालिनिश्चयीयप्रतिबन्धकतात्वात् अवृत्तित्वाभाववद्वृत्तिप्रमेयत्वत्वं यत्पक्षसाध्यकानुमितिनिरूपित-यत्प्रति-

## जागदीशी

**निरूपितयत्प्रतिबन्धकतानतिरिक्तवृत्ति-स्वातिरिक्तेन तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकेन अघटितम् तादृशविशिष्टं तत्पक्षहेतुसाध्यकानुमितौ दोष इति विवक्षितम्। उक्तस्थलीयसव्यभिचारस्य बाधघटितत्वेऽपि व्यभिचारज्ञानत्वावच्छिन्नं यत् तथाविधानुमिति प्रतिबन्धकत्वं तदनतिरिक्तवृत्ति**

तात्पर्यदीपिका

बन्धकतानतिरिक्तवृत्तिविषयिताकेन वृत्तिविशिष्टप्रमेयत्वत्वेन घटितमिति कथमव्याप्तिनिरास इति वाच्यम्। एकत्रद्वयंरीत्या भानानङ्गीकारेण विशिष्टविषयानिवेशेऽनन्तकार्यकारणभावप्रसक्त्या अप्रामाण्यज्ञानादीनां विशेषेणोत्तेजककोटौ निवेशनीयत्वाद्, इदं ज्ञानमवृत्तित्वाभाववद्वृत्तित्वाभाववति अवृत्तित्वाभाववद्वृत्तित्वप्रकारकं वृत्तित्वाभाववति वृत्तित्वप्रकारकम् इत्यनयोरनुगतरूपेणावृत्तित्वाभाववद्वृत्तित्वप्रकारकं निश्चयं प्रति इदं ज्ञानं वृत्तित्वाभाववति वृत्तित्वप्रकारकमित्यस्य च वृत्तित्वमात्रप्रकारकनिश्चयं प्रति उत्तेजकत्वं कल्प्यते। कारणतावच्छेदककुक्षौ यादृशप्रकारकत्वं प्रविष्टं तादृशप्रकारकत्वघटिताप्रामाण्यज्ञानत्वेनैवोत्तेजकत्वानुभवात्। अत एवैतन्मतेऽप्रामाण्यज्ञानादीनां विशेषविशेषोत्तेजकत्वकल्पनया उत्तेजकभेदेन प्रतिबन्धकत्वं

भिन्नं कल्पनीयम्। एवञ्च वृत्तिप्रमेयत्वावगाहित्वस्य तत्प्रतिबन्धकतानतिरिक्तवृत्तित्वाभावान्न दोषः। ननु तथाप्यत्र अवृत्तित्वव्याप्यप्रमेयत्ववत् प्रमेयत्वमवृत्ति इत्याकारकाचार्यानुमोदिताया अनुमितेराहार्यत्वेन तथाविधानुमितेरनङ्गीकृतत्वादप्रसङ्गापत्तिरिति चेन्न, प्रमेयत्वेऽवृत्तित्वग्रहस्य वृत्तित्वग्रहस्य च सामानाधिकरण्येन स्वीकारात्, सामानाधिकरण्येन तत्तद्बुद्धिं प्रति सामानाधि

## जागदीशी

**विषयिताकस्य सव्यभिचारस्य व्यभिचारज्ञानत्वावच्छिन्नप्रतिबन्धकतानतिरिक्तवृत्तिविषयिताकेन धर्मान्तरेण अघटितत्वात् न तत्राव्याप्तिः, तादृशधर्मान्तरं च प्रमेयत्वविशिष्टं स्वमेव सव्यभिचारादिकं सर्वत्र सुलभम्।**

### तात्पर्यदीपिका

करण्येन तत्तदभाववत्तानिश्चयस्याप्रतिबन्धकत्वेनादोषात्। ननु तर्हि सामानाधिकरण्येन निश्चयं प्रति अवच्छेदावच्छेदेन तदभाववत्तानिश्चयस्य प्रतिबन्धकतया प्रमेयत्वत्वव्यापकावृत्तित्वाभाववद्वृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन तादृशवृत्तित्ववत्त्वनिश्चयस्य व्याप्तिग्रहप्रतिबन्धकत्वं-प्रमेयत्वत्वसमानाधिकरणाभावीयावृत्तित्वाभाववद्वृत्तित्वतदितरोभयानवच्छिन्नप्रतियोगिभिन्ना --वृत्तित्वाभाववद्वृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन, वृत्तित्ववत्त्वनिश्चयस्य च बाधविषयकस्य प्रतिबन्धकत्वं प्रमेयत्वत्वव्यापक-( प्रमेयत्वत्वसमानाधिकरणाभावीयवृत्तित्वतदितरोभयानवच्छिन्नप्रतियोगिभिन्न ) वृत्तित्वप्रतियोगिकस्वरूपसम्बन्धेन। अत एव तादृशविलक्षणसम्बन्धघटितव्यभिचारस्य विलक्षणसम्बन्धघटितबाधाघटिततया कथमव्याप्तिरिति चेत्, न, ह्रदत्वावच्छेदेन वह्नेः साध्यतास्थले ह्रदत्वावच्छेदेन बाधस्य सामानाधिकरण्येन बाधघटिततया तत्रैवाव्याप्तेः।

मूलस्थेन **लिङ्गज्ञानस्येत्यत्र** निश्चयपरेण ज्ञानपदेन यादृशविशिष्टविषयकनिश्चयत्वं बतत्प्रतिन्धकतानतिरिक्तवृत्तीत्यादौ ज्ञानत्वेन ज्ञाननिवेशेनापि संस्कारमन्तर्भाव्यासम्भववारणसम्भवे निश्चयत्वानुसरणं किमर्थमिति चेदत्रोच्यते, ज्ञानत्वेन ज्ञाननिवेशे संशयान्यत्वं निवेशनीयं, तदेव निश्चयत्वम्। संशयान्यत्वानिवेशे ह्रदो वह्निमान् न वेति संशयमादायासम्भवतादवस्थ्यमिति चिन्तामणिः। प्रतिबन्धकत्वं प्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वम्।

ननु कथमत्र निश्चयत्वं परित्यज्य कल्पान्तरानुसरणमिति चेत् निश्चयत्वपक्षेऽप्रामाण्यग्रहानास्कन्दितत्वानाहार्यत्वनिवेशनं कर्तव्यम्, प्रतिबन्धकतावच्छेदकीभूतविषयतावत्त्वपक्षे तु केवलं नियताहार्यभिन्नत्वं निवेशनीयमिति लाघवात् समानाकारकज्ञानीयविषयिताया

ऐक्यस्वीकारात् ह्रदो वह्निमान् वह्न्यभाववांश्चेत्याहार्यज्ञानीयवह्नित्वावच्छिन्नप्रकारकह्रदत्वावच्छिन्नविशेष्यकत्वं ह्रदो वह्निमानिति ज्ञाने प्रथमप्रकारतावच्छेदकविशेष्यतावच्छेदकसाम्यात् समानाकारकत्वम् तयोरेवं ह्रदो वह्न्यभाववानिति ज्ञानस्य उत्तरार्धेन समं समानाकारकत्वम्। निर्वह्निपर्वतो वह्निमानिति ज्ञाने वह्न्यभाववत्त्वावच्छिन्नप्रकारतानिरूपितपर्वतत्ववह्न्यभाव धर्मद्वयावच्छिन्नविशेष्यकत्वं वर्तते, अतएव विशेष्यतावच्छेदकतात्मकप्रकारतावह्न्यभावत्वावच्छिन्नप्रकारता, ( जगदीशमते समानाधिकरणविषयताद्वयस्याभिन्नत्वात् ) पर्वतो वह्न्यभाववानितिबाधे विशेष्यतावच्छेदकतानात्मकप्रकारतेति न तयोः समानाकारकत्वम्। अथ यत्प्रतिबन्धकताघटितलक्षणेऽपि बाधज्ञानीयैकदेशविषयताव्यक्तेः प्रतिबन्धकतानतिरिक्तवृत्तितया एकदेशमादाय बाधाद्यसम्भव इति चेन्न, यादृशविशिष्टविषयकनिश्चयत्वं तादृशानुमितिनिरूपितयत्प्रतिबन्धकतानतिरिक्तवृत्ति स्वातिरिक्तेन तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयतासामान्यकेनाघटितस्तादृशविशिष्टो दोष इत्यर्थकरणात्। अथ स्वातिरिक्तेन तत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितासामान्यकेनेत्यत्रानतिरिक्तवृत्तित्वप्रवेशो व्यर्थः, स्वरूपसम्बन्धरूपतत्प्रतिबन्धकतावच्छेदकत्वनिवेशेनैवोपपत्तेरिति चेन्न, तत्प्रतिबन्धकतावच्छेदकविषयितासामान्यकसाध्यव्यापकीभूताभावप्रतियोगिहेत्वादिघटिततयाऽसाधारण्येऽव्याप्तिः। यत्प्रतिबन्धकता-तत्प्रतिबन्धकतापर्याप्त्यनुसरणसमये पुनर्वह्न्यभाववद्ध्रदादावव्याप्तेः। न च वह्न्यभाववदभाववत्कालीन-ह्रदो वह्निमानित्यत्र तादृशनिश्चयविशिष्टनिश्चयप्रतिबन्धकतावच्छेदकविषयितासामान्यकाभाववद् वह्न्यभाववदभाववत्कालीनह्रदघटितत्वेन बाधेऽव्याप्तेर्वारणायावश्यं प्रतिबन्धकतायां ज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेशनीयमिति वाच्यं, प्रमेयत्वविशिष्टासाधारण्येऽतिव्याप्तेर्वारणासम्भवात् केवलासाधारण्येऽव्याप्तेश्च। न च ज्ञानवैशिष्ट्यानवच्छिन्नत्वासाधारण्यविषयकत्वानवच्छिन्नत्वोभयाभाववत्त्वं प्रतिबन्धकतायां निवेशनीयमिति वाच्यम्, तादृशप्रतिबन्धकतावच्छेदकविषयितासामान्यकहेतुमत्पक्षघटिततया साध्यव्यापकीभूताभावप्रतियोगिहेतुमत्पक्षरूपासाधारण्येऽव्याप्तेः। वस्तुतः सामान्यपदमनिवेश्य यादृशविशिष्टविषयकनिश्चयत्वं तादृशानुमितिनिरूपित-यत्प्रतिबन्धकतानतिरिक्तवृत्ति स्वातिरिक्तेन तादृशानुमितितत्प्रतिबन्धकता यादृशविशिष्टविषयिताव्यापिका तादृशविशिष्टेनाघटिततादृशविशिष्टस्तादृशानुमितौ दोष इति समुदितार्थ इति ध्येयम्।

## जागदीशी

न चैवमपि साध्याभावविशिष्टपक्षादिविषयित्वस्यानुमितिप्रतिबन्धकताशून्ये संस्कारादौ सत्त्वादसम्भव इति वाच्यम्, मूलस्थेन लिङ्गज्ञानस्येत्यत्र

निश्चयपरेण ज्ञानपदेन यादृशविशिष्टविषयकनिश्चयत्वं तादृशप्रतिबन्धकतानतिरिक्तवृत्ति इत्यर्थलाभेन तन्निरासात्। प्रतिबन्धकत्वं वा प्रतिबन्धकतावच्छेदकीभूतविषयितावत्त्वं वाच्यम्, तथा च संस्कारादेरपि तादृशविषयितावत्त्वादेव नासम्भवः। संयोगाद्यभावस्य च प्रतियोगिवैयधिकरण्यावच्छिन्नस्यैव निर्णयो द्रव्ये संयोगानुमितिविरोधी; न त्वव्याप्यवृत्तित्वज्ञानाभावविशिष्टसंयोगाभावाभावस्य निर्णयस्तथा, येन वृक्षः संयोगी द्रव्यत्वादित्यादौ संयोगाभावविशिष्टवृक्षादावतिव्याप्तिरिति ध्येयम्। प्रमेयत्वादिविशिष्टे सव्यभिचार इति। अत्र प्रमेयत्वविशिष्टं यत् साध्यव्यभिचारिसाधनं तत्रेत्यर्थः कार्यः। न तु प्रमेयत्वविशिष्टं यत् साध्यव्यभिचारित्वं तद्वति साधन

## तात्पर्यदीपिका

अत्र प्रतिबन्धकतावच्छेदकविषयितापदेन विशेष्यताविशिष्टविशेष्यता विवक्षिता। वैशिष्ट्यञ्च स्वावच्छेदकतापर्याप्त्यधिकरणधर्मपर्याप्तावच्छेदकतानिरूपितत्व-स्वनिष्ठप्रतिबन्धकतानिरूपितावच्छेदकतानिरूपिताभावनिष्ठावच्छेदकतानिरूपित-निरूपितत्वनिष्ठावच्छेदकता-निरूपितप्रकारतानिष्ठावच्छेदकतानिरूपित-भेदनिष्ठावच्छेदकतानिरूपितावच्छेदकताश्रयप्रकारता-निरूपितत्वोभयसम्बन्धेन। तादृशी विशेष्यता च संशयसाधारणीति नासम्भवः।

प्रमेयत्वविशिष्टेति। विशेष्यांशे विशेषणीभूतधर्मस्य प्रकृते न प्रतिबन्धकताभेद-प्रयोजकत्वं किन्तु प्रकारांशे इति भावः।

## जागदीशी

इत्यर्थस्तादृशस्य लक्ष्यत्वात्, साधनधर्मिकप्रमेयत्वविशिष्टसव्यभिचारत्वप्रकारकनिश्चयत्वेनापि व्याप्तिबुद्धौ प्रतिबन्धकत्वात्, अन्यथा प्रमेयत्वविशिष्टव्यभिचारवत्तानिश्चयस्य प्रमेयत्वविशिष्टव्यभिचारत्वांशे भ्रमत्वग्रहदशायां हेतौ व्याप्तिग्रहानुत्पादप्रसङ्गात्, यद्रूपावच्छिन्नवत्तानिश्चयत्वेन विरोधित्वं तदवच्छिन्नाभावगर्भस्यैव भ्रमत्वग्रहस्योत्तेजकत्वात्। अत एव गृहादौ घटसामान्याभावे साध्ये गृहस्य घटवत्त्वमिव नीलघटवत्त्वमपि बाध एवेति वदन्ति।

न च ह्रदः प्रमेयवह्निमान् धूमादित्यादौ गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वेन प्रमेयवह्नित्वावच्छिन्नाभावविशिष्टह्रदाद्यप्रसिद्ध्या बाधादावव्याप्तिरिति वाच्यम्, तत्र ह्रदो निर्वह्निरिति ज्ञानस्यापि प्रतिबन्धकतया निर्वह्नित्वविशिष्ट-

ह्रदादेरेव दोषत्वसम्भवात्। वस्तुतो गुरुधर्मस्य प्रतियोगितावच्छेदकत्वमत एव लक्षणम्, अन्यथा ह्रदो दाहजनकद्रव्यवान् द्रव्यत्वारित्यादौ बाधाद्यसम्भवापत्तेः,

### तात्पर्यदीपिका

अथ यादृशविशिष्टविषयिता प्रकृतानुमित्यवृत्तिस्तादृशविशिष्टाघटितत्वमेवेति कथं नोक्तमिति चेन्न पर्वतो वह्न्यभावव्याप्यवान् घटकालीनवह्न्यभावादित्यादौ घटकालीनवह्निमत्पर्वतरूपपक्षरूपासिद्ध्यादावव्याप्त्यापत्तेः, वह्निमत्पर्वतरूपतादृशविशिष्टान्तरघटितत्वादिति। यादृशविशिष्टविषयकत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तादृशविशिष्टान्तराघटिततादृशविशिष्टत्वमिति द्वितीयलक्षणे संस्कारान्तर्भावेन व्यभिचारवारणाय ज्ञानपदस्य निश्चयपरत्वं व्याख्यातम्। कल्पान्तरञ्च प्रतिबन्धकत्वपदस्य प्रतिबन्धकतावच्छेदकविषयित्वार्थकत्वम्।

## दीधितिः

एवं च पक्षतावच्छेदकविरहविशिष्टः पक्षः, पक्षनिष्ठस्तद्विरहो वा, साध्याभाववृत्तिसाधनम्, साधनवद्वृत्तिसाध्याभावो वा हेतुदोषः, येन केनापि सम्बन्धेन तद्वांश्च प्रकृतो हेतुर्दुष्टः।

### जागदीशी

निर्वह्नित्वविशिष्टह्रदादिविषयकत्वस्य प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वात्। दाहजनकद्रव्यत्वाद्यवच्छिन्नाभावाप्रसिद्ध्या तद्विशिष्टह्रदादिविषयित्वस्य चासम्भवात्। न च तत्र साध्यनिष्ठपक्षवृत्तित्वाभाव एव बाध

### तात्पर्यदीपिका

अत्र कल्पान्तरे संशयान्तर्भावेन कथं न व्यभिचारः, तत्र साध्याभावविशिष्टविषयकत्वस्य सत्त्वात्। प्रतिबन्धकतावच्छेदकविषयित्वस्य च तादृशसंशये स्वयमेव पक्षतायामस्वीकारादिति चेदत्र लक्षणे यत्प्रतिबन्धकतावच्छेदकविषयित्वाभाववदवृत्तित्वं प्रविष्टमस्ति जगदीशव्याख्याने तत्र प्रकृतानुमितिप्रतिबन्धकतावच्छेदकविषयित्वाभावस्य प्रतियोगितावच्छेदकसम्बन्धत्वं मया स्वरूपत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वैतदन्यतरसम्बन्धे कल्प्यते। तथाचान्यतरलभ्यत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्त्वसम्बन्धेन पक्षः साध्यवान्न-

वेति संशये वर्तमानत्वादेव तत्सम्बन्धावच्छिन्नप्रतियोगिताकतादृशविषयित्वाभावस्य संशयेऽसत्त्वात् तत्र साध्याभावविशिष्टपक्षरूपयादृशविशिष्टविषयकत्वस्य सत्त्वेऽपि न तदनतिरिक्त-

## दीधितिः

याद्दशधर्मिणि याद्दशधर्मवत्ताज्ञानमनुमितिप्रतिबन्धकं तस्य धर्मिणस्ताद्दशधर्मवत्त्वं हेतुदोष इत्यपि कश्चित् ।

### जागदीशी

इति साम्प्रतम् । ह्रदत्वप्रकारकप्रमाविशेष्यो वह्नित्वप्रकारकप्रमाविशेष्यवान् द्रव्यत्वादित्यादौ तस्याप्यसम्भवात्, ह्रदावृत्तित्वत्वमपेक्ष्य ह्रदत्वप्रकारकप्रमाविशेष्यावृत्तित्वस्य गुरुतया तदवच्छिन्नाभावस्याप्यप्रसिद्धेरिति ध्येयम् ।

एवं चेति—विशिष्टविवक्षणे चेत्यर्थः । पक्षतावच्छेदकादीत्यादिना साध्यहेत्वोः संग्रहः । असमानाकारस्यापि ज्ञानस्य प्रतिबन्धकतामाह पक्षनिष्ठ इति । येन केनापीति,—दोषासमानकालीनस्यापि हेतोरेकज्ञानविषयित्वादिसम्बन्धेन तत्सम्बन्धित्वात्, विशिष्टदोषाप्रसिद्धेश्च सम्बन्धसामान्येन तद्वत्त्वोक्तावपि सद्धेतावतिप्रसङ्गाभावादिति भावः । प्रकृत इति । प्रकृतहेतुतास्थले हेतुतावच्छेदकविशिष्टहेतोरलीकत्वेऽपि नाव्याप्तिः ।

### तात्पर्यदीपिका

वृत्तित्वहानिः । (स्वानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्व-स्वानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वस्वैतदुभयसम्बन्धेन प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपित - प्रतिबन्धकताविशिष्टत्वमेव हेत्वाभासत्वमित्यनुगमः) यत्प्रतिबन्धकताघटितलक्षणस्य शुद्धव्यभिचारस्थले उक्तरूपावच्छिन्नपदेन प्रमेयत्वविशिष्टसव्यभिचारमादाय लक्षणसमन्वयः ।

## दीधितिः

अथ पर्वतत्वेन पक्षत्वे वह्नित्वेन साध्यत्वे विशिष्टधूमत्वेन च हेतुत्वे पर्वतादेः काञ्चनमयत्वविरहः, ह्रदस्य वह्निधूमशून्यत्वम्,

पर्वतस्य महानसीयवह्निधूमविरहित्वम्, मेयत्वस्य केवलधूमस्य वा वह्निव्यभिचारः, विशिष्टस्य धूमस्य वा पर्वतीयवह्निव्यभिचारो न दोषः। न वा तत्सम्बन्धेन तत्र तस्य हेतोर्दुष्टत्वम्। अत-

जागदीशी

यादृश इति—यद्धर्मविशिष्ट इत्यर्थः। एवमन्यत्रापि। कश्चिदित्यस्वरसः, तद्बीजं तु यादृशधर्मिणि यादृशधर्मवत्ताज्ञानं वस्तुगत्याऽनुमितिप्रतिबन्धकमित्युक्तौ पर्वते ह्रदे च वह्न्यभाववत्तावगाहिसमूहालम्बनमादाय वह्न्यभावविशिष्टह्रदस्यापि पर्वतो वह्निमान् धूमादित्यादौ दोषत्वापत्तिः। यादृशधर्मिणि यादृशधर्मवत्तानिश्चयत्वावच्छिन्नानुमितिप्रतिबन्धकत्वमित्युक्तौ च असम्भवः। ह्रदत्वेन घटे धर्मिणि अभावत्वेन भाव तत्र च वह्नित्वेन गुञ्जां प्रतियोगिविधयाऽवगाहमानस्यापि ज्ञानस्य ह्रदो वह्निमानित्यनुमितिप्रतिबन्ध-

दीधितः

स्तद्धर्मावच्छिन्नतत्पक्षक-तद्धर्मावच्छिन्नतत्साध्यक-तद्धर्मावच्छिन्नतद्धेतुकानुमितिप्रतिबन्धकत्वं वाच्यम्। तथा च निर्वह्निः पर्वतो

जागदीशी

कत्वेन ह्रदत्वविशिष्टधर्मिकवह्निसामान्याभावत्वावच्छिन्नप्रकारताकनिश्चयत्वादिना प्रतिबन्धकत्वविरहादिति ध्येयम्। विशिष्टधूमत्वेनेति—अविच्छिन्नमूलकत्वादिविशिष्टधूमत्वेनेत्यर्थः। पक्षसाध्यहेतुत्वानामवच्छेदकप्रवेशार्थमाह पर्वतादेरिति। आदिना वह्निधूमयोरुपग्रहः, काञ्चनमयत्वविरह इति—न दोष इति परेणान्वयः। एवमग्रेऽपि। यथाश्रुतलक्षणं तु काञ्चनमयपर्वतो वह्निमानित्यनुमितिविरोधित्वमादायैव तत्रातिव्याप्तमिति भावः। अप्रसिद्धपक्षिकामिव प्रसिद्धपक्षिकामप्यनुमितिमादायातिव्याप्तिवारणाय पक्षतावच्छेदकं प्रवेशनीय-

तात्पर्यदीपिका

असमानाकारकस्यापि ज्ञानस्य प्रतिबन्धकतामिति।—यथा पक्षतावच्छेदकाभाववत्पक्षः आश्रयासिद्धिस्तथा पक्षवृत्तिपक्षतावच्छेदकाभावकत्वमपि, तस्य हेतुनिष्ठतया

हेतोर्दुष्टत्वव्यवहारनिर्वाहकत्वात्। तथा च पक्षतावच्छेदकाभाववत्पक्षकत्वस्य पक्षतावच्छेदकाभाववत्पक्षकादितादृशविशिष्टान्तराघटिततया काञ्चनमयत्ववत्पर्वतकत्वादेः काञ्चनमयत्ववत्पर्वतकत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकम्, अथ च प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत् काञ्चनमयत्ववत्पर्वतत्वं तदवच्छिन्नघटितत्वात्

## दीधितिः

वह्निमान् पर्वतावृत्तिवह्निमान् वा तद्व्यभिचारिणः पर्वतावृत्तेर्वा धर्मादित्यादौ न कोऽपि हेत्वाभासः स्यात्, तादृशानुमितेरप्रसिद्धत्वादिति।

## जागदीशी

मित्याशयेनाह ह्रदस्य वह्निधूमशून्यत्वमिति। तद्धर्मावच्छिन्नपक्षकत्वाप्रवेशे ह्रदो वह्निमानित्याकारकवह्निसाध्यकधूमलिङ्गकानुमितेः प्रतिबन्धकतावच्छेदकत्वस्य तत्रापि सत्त्वेन तत्रातिव्याप्तिरेवेति भावः। अप्रसिद्धसाध्यहेतुकामिव प्रसिद्धसाध्यहेतुकामप्यनुमितिमादायातिप्रसङ्गवारणम् साध्यहेतुतयोरवच्छेदकप्रवेशस्य फलमाह पर्वतस्येति। तद्धर्मावच्छिन्नसाध्यहेत्वोरप्रवेशे पर्वतो महानसीयवह्निमान् तादृशधूमादित्याद्यनुमितिमादाय तत्प्रतिबन्धकतावच्छेदकत्वस्य महानसीयवह्न्यभाववत्पर्वते तादृशधूमाभाववति पर्वते च सत्त्वात् तयोरतिव्याप्तिः स्यादिति भावः।

## तात्पर्यदीपिका

पक्षासिद्ध्यादावव्याप्तिरिति भावः। अत एव दीधितावेवञ्चेतीत्यादि। ह्रदस्य वह्निधूमेत्यादीति ह्रदनिष्ठं वह्निशून्यत्वं धूमशून्यत्वञ्चेत्यर्थः। तादृशेति महानसीयधूमादित्यर्थः। पुनस्तादृशेति महानसीयधूमाभाववतीत्यर्थः।

## जागदीशी

व्याप्यत्वांशेऽप्यनुमितौ हेतुविशेषोऽवश्यं निवेशनीय इत्याशयेनाह प्रमेयत्वस्येति। अन्यथा वह्निव्याप्यमेयत्ववान् पर्वतो वह्निमानित्यनुमितिव्यक्तिप्रतिबन्धकतावच्छेदकत्वस्य वह्निव्यभिचारिमेयत्वे सत्त्वात् तत्रातिव्याप्तिः स्यादिति भावः।

व्याप्यत्वांशे हेतुतावच्छेदकप्रवेशार्थमाह केवलधूमस्येति। व्याप्यत्वांशे ऽप्यनुमितौ साध्यतावच्छेदकप्रवेश आवश्यक इत्यभिप्रेत्याह विशिष्टधूमस्य वेति। अन्यथा पर्वतीयवह्निव्याप्यविशिष्टधूमवान् पर्वतो वह्निमानित्याकारकानुमिति-प्रतिबन्धकतावच्छेदकत्वस्य पर्वतीयवह्निव्यभिचारित्वविशिष्टधूमे सत्त्वादति-व्याप्तिः स्यादिति भावः। तत्सम्बन्धेनेति—तेषां पर्वतनिष्ठकाञ्चनमयत्वविरहा-दीनां यथाकथञ्चित् सम्बन्धेनेत्यर्थः। तत्र पर्वते वह्नेः साध्यत्वे, तस्य विशिष्ट-धूमस्य, समानधर्मिकज्ञानस्यैव प्रतिबन्धकत्वमते पर्वतत्वेन वह्निशून्यपर्वतपक्षि-कायाः पर्वतो वह्निमानित्यनुमितेः प्रतिबन्धकतावच्छेदके वह्न्यभाववत्पर्वते-ऽतिव्याप्तिवारणार्थं तत्पक्षकेति। तथा च पवतत्वेन वह्निमत्पर्वतपक्षकानु-मितिप्रतिबन्धकतावच्छेदकत्वस्य तत्रासत्त्वान्नातिव्याप्तिः। वह्नित्वेन पर्वता-वृत्तिवह्निविषयिकायाः पर्वते वह्निरित्याकारिकायाः पर्वतो वह्निमानित्याकारि-काया वाऽनुमितेः प्रतिबन्धकतावच्छेदके पर्वतावृत्तित्वविशिष्टवह्नावति प्रसङ्गवारणाय तत्साध्यकेति। तथा च वह्नित्वेन पर्वतीयवह्निसाध्यकानुमिति-प्रतिबन्धकतावच्छेदकत्वविरहान्न तत्रातिप्रसङ्गः। एवं धूमत्वेन पर्वतावृत्ति-धूमस्य पक्षधर्मतावगाहिन्या अनुमितेः प्रतिबन्धकतावच्छेदकपर्वतावृत्तित्व-विशिष्टधूमेऽतिप्रसङ्गवारणाय तद्धेतुकेति। इत्थं च पर्वतत्वेनैव निर्वह्नि-पर्वतस्य पक्षत्वे वह्नित्वेनैव पर्वतावृत्तिवह्नेः साध्यत्वे धूमत्वेनैव पर्वतावृत्ति-धूमस्य हेतुतायां पर्वतो वह्निमाद् धूमादित्यत्रापि वह्न्यभावविशिष्टपर्वतादिकं प्राचां मते हेतुदोष एवेति हृदयम्।

## जागदीशी

येन सम्बन्धेन यस्य पर्वतत्वादेः पक्षतावच्छेदकत्वं तेनैव सम्बन्धेन तद्धर्मावच्छिन्नत्वलाभाय तत्पक्षकेत्यादौ तत्पदम्। तेन विषयितया पर्वतत्वा-द्यवच्छिन्नं यज् ज्ञानादिकं तत्पक्षकानुमितिप्रतिबन्धकतामादाय समवायेन पर्वतत्वाद्यवच्छिन्नस्य पक्षत्वादिस्थले पर्वतत्वविशिष्टज्ञाननिष्ठवह्न्यभाववत्त्वादौ नातिप्रसङ्ग इत्याहुः। इत्यादाविति-इत्यादिन्यायस्थलीयहेताविस्यर्थः। अत्र च निर्वह्निपर्वतत्वेन वह्निमत्पर्वतव्यक्तेः पक्षत्वे आश्रयासिद्धिरेव निर्वह्नि-पर्वतत्वेन निर्वह्निपर्वतव्यक्तेः पक्षत्वे बाध एव दोषः। पर्वतः पर्वतावृत्ति-वह्निमानित्यत्र तु बाधः। तयोश्च तादृशपक्षसाध्यकानुमित्यप्रसिद्ध्या-

ऽव्याप्तिः। पर्वतो वह्निमान् वह्निव्यभिचारिधर्मादित्यत्र वह्निव्यभिचारित्व-विशिष्टे वह्निव्याप्यत्वावगाह्यनुमित्यप्रसिद्धया व्यभिचारादावव्याप्तिः। पर्वतो वह्निमान् पर्वतावृत्तिधर्मादित्यत्र पर्वते प्रकृतहेतुवैशिष्ट्यावगाह्यनुमित्य-प्रसिद्धया स्वरूपासिद्ध्यादावव्याप्तिरिति द्रष्टव्यम्। तादृशानुमितेरिति—द्वितीय-व्याख्यानुसारेणेदम्। तेन पर्वतो वह्निमान् वह्निव्यभिचारिधर्मादित्यादा-वाद्यव्याख्यायामनुमितिप्रसिद्धावपि न क्षतिः। वस्तुतः अनाहार्यपरामर्शस्यै-वानुमितिहेतुत्वात् प्रथमकल्पेऽपि तत्रानुमितेरप्रसिद्धिः।

## दीधितिः

अत्र वदन्ति, यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त-स्तदुत्तरमनुमितौ अनाहार्य्यमानसज्ञाने वा पक्षतावच्छेदकविशिष्ट-पक्षे साध्यतावच्छेदकविशिष्टसाध्यवैशिष्ट्यावगाहित्वस्य साध्यता-वच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्ट-

### जागदीशी।

यद्विषयकेति,—यद्विषयकनिश्चयस्य विरोधिनी यद्विषयकनिश्चयत्वाभाव-व्याप्या, यद्विषयकनिश्चयावृत्तिरिति यावत्, तादृशी या विषयिता तत्प्रति-योगिक इत्यर्थः। एतस्य च द्वयोर्व्यतिरेक इत्यग्रेणान्वयः। तदुत्तरमनुमितौ तादृशनिश्चयोत्तरानुमितिसामान्ये। पक्षतावच्छेदकविशिष्टपक्ष इत्यादि,—अत्र द्वितीयपक्षपदं पक्षतावच्छेदकताघटकसम्बन्धेन पक्षतावच्छेदकवैशिष्ट्यस्य लाभाय। तेन ह्रदे वह्न्यभावनिश्चयोत्तरं कालिकादिसम्बन्धेन ह्रदत्वादि-विशिष्टकालादौ वह्नेस्तद्व्याप्यधूमवत्त्वस्य चानुमितौ उभयस्य सत्त्वेऽपि न वाधादावसम्भवः। कथितदिशैवाग्रिमयोः साध्यहेतुपदयोर्व्यावृत्तिरवसेया।

### तात्पर्यदीपिका

परोक्षज्ञाने इच्छायाः कारणत्वानभ्युगमेन पूर्वोक्त-निर्वह्निः पर्वतो वह्निमानित्यादिस्थले वह्निविरोधिधर्मधर्मितावच्छेदककतत्प्रकारकानाहार्य्यज्ञानस्यासम्भवात् प्रसक्ताया अव्याप्तेः परिहाराय दीधितावत्रवदन्तीत्यादिग्रन्थमुत्थापयति। यद्विषयकेत्यत्र यत्पदं दोषत्वे-

नाभिमतसाध्याभाववत्पक्षादिपरम्। तदुत्तरमित्यत्र तत्पदमपि तादृशनिश्चयपरम्। तथा च यद्विषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षविशेष्यता-

## दीधितिः

हेतुमत्तावगाहित्वस्य च द्वयोर्व्यतिरेकस्तत्त्वं हेतुदोषत्वं। पक्षता-वच्छेदकवैशिष्ट्यादिकं वैज्ञानिकं, न तु वास्तवं ग्राह्यम्। व्याप्ति-श्चान्वयतो व्यतिरेकतश्च वाच्या।

## जागदीशी

तथा च यादृशविशिष्टविषयकनिश्चयोत्तरानुमितिसामान्ये यादृशविशिष्ट-विषयकनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगिकः प्रकृतपक्षे प्रकृतसाध्याव-गाहित्व-प्रकृतपक्षधर्मिकप्रकृतसाध्यव्याप्यहेतुमत्त्वावगाहित्वोभयव्यतिरेकस्तादृश-वैशिष्टमेव प्रकृतपक्षसाध्यन्यायस्थलीयप्रकृतहेतौ दोष इति फलितार्थः। पर्वतधर्मिकवह्न्यभावव्याप्यवत्तावगाहित्व - वह्न्यभावव्याप्यव्याप्यधूमवत्त्वाव-गाहित्वोभयव्यतिरेकस्य वह्निविशिष्टपर्वतनिश्चयत्वाभावव्याप्यं यत् पर्वतधर्मिक-वह्न्यभावव्याप्यवत्तावगाहित्वं तत्प्रतियोगिकत्वात् पर्वतो वह्न्यभावव्याप्यवान् धूमादित्यादौ वह्निविशिष्टपर्वतेऽतिव्याप्तिः, तद्वारणाय सामान्य इत्युक्तम्।

## तात्पर्यदीपिका

निरूपित - प्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताकत्व-प्रकृतसाध्यतावच्छेदकावच्छिन्नव्याप्ति - विशिष्टप्रकृतहेतुतावच्छेदकावच्छिन्नप्रकारताकत्वोभयाभावो विरोधिविषयताप्रयुक्तस्तत्त्वं हेत्वा-भासत्वमिति फलितार्थः। 'दोष इति फलितार्थ' इत्यस्यानुगमप्रणाली च—उभयाभाववृत्ति-रूपवत्त्वं हेत्वाभासत्वम्। रूपे उभयाभाववृत्तित्वञ्च—स्वावच्छिन्नविषयताशालिनिश्चयवृत्तितान-वच्छेदकधर्मघटितधर्मावच्छिन्नप्रतियोगिताकत्व- स्वावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरा-नुमितित्वव्यापकत्वोभयसम्बन्धेन। स्वं रूपं, तच्च लक्ष्यतावच्छेदकत्वेनाभिमतं वह्न्यभाव-विशिष्टह्रदत्वादिकम्।

अत्र वदन्तीत्यादिकल्पे पर्वतधर्मिकवह्न्यभावव्याप्यवत्तावगाहित्वस्य वह्न्यभावव्याप्यव्याप्य-धूमवत्तावगाहित्वस्य च द्वयोर्व्यतिरेकस्य वह्निविशिष्टपर्वतनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगि-

## जागदीशी

तथा च वह्निविशिष्टपर्वतनिश्चयोत्तरमुद्पन्नायां पर्वतो वह्न्यभावव्याप्यवान् वह्न्यभावव्याप्यव्याप्यधूमवांश्चेत्याकारिकायामेवानुमितौ पक्षधर्मिकसाध्यावगाहित्व-तादृशसाध्यव्याप्यहेतुमत्तावगाहित्वोभयव्यतिरेकस्यासत्त्वान्न तादृशस्थले वह्निविशिष्टपर्वते दोषः।

### तात्पर्यदीपिका

कत्वात् पर्वतो वह्न्यभावव्याप्यवान् धूमादित्यादौ वह्निविशिष्टपर्वतेऽतिव्याप्तिरिति जगदीशेन सामान्यान्तं निवेशितम्। अथ वह्निमान् पर्वतो वह्न्यभावव्याप्यधूमवान् वह्न्यभावव्याप्यव्याप्यवान् न वेत्येवमंशतो निश्चयात्मकज्ञाने पक्षे साध्यावगाहित्वस्य साध्यव्याप्यहेतुमत्तावगाहित्वस्य च वृत्तेः निरुक्तोभयाभावस्य वह्निमत्पर्वतनिश्चयावृत्तिविषयिता-प्रतियोगिकत्वाभावात् वह्निमत्पर्वतेऽतिव्याप्तेः प्रतियोगिकान्तदलेनैव वारयितुं शक्यत्वात् सामान्यान्तं विफलमिति चेन्न, वह्न्यभावव्याप्यवत्कालीनपर्वतपक्षकवह्न्यभावव्याप्यसाध्यकानुमितौ वह्निमत्पर्वतेऽतिव्याप्तेर्वारणाय सामान्यान्तोपादानम्, तत्र पक्षतावच्छेदकांशे संशयाभावात्। अत्रापि प्रमेयत्वविशिष्टव्यभिचारादावतिप्रसङ्गवारणाय तादृशविशिष्टान्तराघटितत्वं देयमेव।

अथ पर्वतो वह्निमान् वह्न्यभावव्याप्यवान् तद्व्याप्यवांश्चेति आहार्य्यनिश्चयस्यापि कदाचित् सम्भवादाहार्यभेदानाञ्च तत्तद्व्यक्तित्वेनैव निवेशनीयतया निरुक्ताहार्य्यव्यक्तिभेदस्यानिवेशादेव पर्वते वह्न्यभावव्याप्यवत्तावगाहितया वह्निमत्पर्वतविषयकनिश्चयत्वाभावव्याप्यत्वा-

## जागदीशी

तत्रापि वाधादिसंशयोत्तरोत्पन्नायां कस्याञ्चिदनुमितौ पक्षधर्मिकसाध्यावगाहित्व-साध्यव्याप्यहेतुमत्तावगाहित्वोभयोः सत्त्वेन ह्रदो वह्निमान्

### तात्पर्यदीपिका

सम्भवेन पर्वतपक्षकवह्न्यभावव्याप्यसाध्यकस्थले वह्निमत्पर्वतेऽतिप्रसङ्गासम्भवात् सामान्यान्तं व्यर्थमिति चेन्न, पर्वतत्वावच्छेदेन वह्नेः साध्यतास्थले पर्वतत्वसामानाधिकरण्येन वह्न्यभावव्याप्यवत्पर्वतात्मकसत्प्रतिपक्षसंप्रदाय निरुक्ताहार्य्यव्यक्तिभेदनिवेशस्यावश्यकत्वेन निरुक्तस्थले वह्निमत्पर्वतेऽतिप्रसङ्गवारकतया तत्सार्थक्यादिति केचित्।

नन्वसम्भववारणायानाहार्य्यस्यैव दोषविषयकनिश्चयस्य निवेशात् निर्वह्निर्वह्निमान् गृहं च घटवदित्यस्यानाहार्य्यत्वासम्भवेनानाहार्य्यघटवद्गृहविषयकनिश्चयावृत्तित्वस्य निर्वह्नित्वविशिष्टे

वह्न्यवगाहितायाः सत्त्वेन तत्प्रतियोगिकनिरुक्ताभावस्य घटवद्गृहविषयकनिश्चयोत्तरानुमितित्वावच्छेदेन वर्तमानत्वादुक्तातिप्रसङ्गोदुर्वार इति चेन्न, यद्विषयकनिश्चयस्येत्यत्र यत्पदग्राह्यदोषविषयितायामेवानाहार्यत्वनिवेशात्। तच्च इच्छाविशिष्टान्यत्वम्। वैशिष्ट्यञ्च स्वप्रयोज्यत्व-स्वाव्यवहितोत्तरज्ञानीयत्वोभयसम्बन्धेन। स्वमिच्छा; निर्वह्नौ वह्निज्ञानं जायतामितीच्छावैशिष्ट्यं तु निर्वह्नित्वविशिष्टे वह्नित्वावच्छिन्नावगाहितायामेव, तदन्यत्वञ्च घटवद्गृहविषयितायामस्त्येवेति। न च तथापि घटाभाववद्गृहकालीन-निर्वह्निर्वह्निमानितिज्ञानीयनिर्वह्निधर्मिकवह्नित्वावच्छिन्नावगाहिताया अनाहार्यघटवद्गृहविषयकनिश्चयावृत्तित्वेन निरुक्तातिप्रसङ्गतादवस्थ्यमिति वाच्यम्, अनाहार्ययद्रूपावच्छिन्नविषयताशालिनिश्चयवृत्तितानवच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वस्य निरुक्तोभयाभावे विवक्षितत्वात्। निर्वह्नित्व-

## जागदीशी

**धूमादित्यादौ सर्वत्रैव बाधप्रभृतावसम्भवः स्यादतो यादृशनिश्चयपदम्। यद्विषयकनिश्चयस्य पूर्वमित्युक्तौ बाधादिनिश्चयपूर्वोत्पन्नानुमितौ साध्याव-गाहित्व-तद्व्याप्यवत्तावगाहित्वोभयोः सत्त्वादसम्भवः स्यादतस्तदुत्तरमित्युक्तम्। निश्चयश्चागृहीताप्रामाण्यको निविष्टस्तेन भ्रमत्वेन गृह्यमाणस्य बाधादिनिश्चयस्योत्तरमुदुत्पन्नायामनुमितौ कदाचिन्निरुक्तावगाहिताद्वयसत्त्वेऽपि नासम्भवतादवस्थ्यम्। निर्वह्निर्वह्निमान् धूमादित्यादौ घटविशिष्टगृहादावतिव्याप्तिस्तन्निश्चयोत्तरानुमितित्वावच्छेददेनैव निर्वह्निधर्मिकवह्न्यवगाहित्वविरहेण निरुक्तावगाहिताद्वयव्यतिरेकस्य सत्त्वादतस्तद्वारणाय विशिष्टविषयकनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगिक इत्युक्तम्।**

## तात्पर्यदीपिका

विशिष्टे वह्न्यवगाहितात्वस्यानाहार्यघटवद्गृहविषयकनिश्चयवृत्तितानवच्छेदकत्वविरहेणातिप्रसङ्गानवकाशादिति विभावनीयम्।

**बाधादिनिश्चयपूर्वोत्पन्नेति**—तदानीं बाधनिश्चयस्य लौकिकसन्निकर्षादिनापि सम्भवादिति भावः।

**तदुत्तरमिति**—उत्तरपदञ्चाव्यवहितोत्तरार्थकम्। तच्च अनुपूर्वक-माधातूपस्थाप्यानुमितिरूपक्रियायां ज्ञाधात्वर्थज्ञानरूपक्रियायां वा विशेषणमतो द्वितीयेति भावः।

द्वितीयपक्षपदमित्यादि-जगदीशोक्तौ विविच्यते,—न च समवायसम्बन्धेन ह्रदत्वविशिष्टे वह्नयवगाहित्व-वह्निव्याप्तिविशिष्टहेतुमत्तावगाहित्वयोरेव वह्नयभावविशिष्टह्रदविषयकनिश्चया-वृत्तित्वाद् दोषविषयकनिश्चयोत्तरानुमितित्वावच्छेदेनैव तादृशनिश्चयावृत्तिविषयिताप्रतियोगिकस्य समवायेन ह्रदत्वविशिष्टे साध्य-तद्व्याप्यवत्तावगाहित्वयोरभावस्य सत्त्वेन नासम्भव इति द्वितीयपक्षपदं व्यर्थमेवेति चेत्, अत्र केचित् यादृशस्थलविशेषे कालिकसम्बन्धावच्छिन्नह्रदत्व-निष्ठावच्छेदताकविशेष्यतानिरूपितवह्नित्वावच्छिन्नप्रकारताकवह्नयभावविशिष्टह्रदविषयकं ज्ञानं न जातं, तत्रत्यदोषेऽव्याप्तिरित्याहुः। परे तु—तादृशोभयाभावपदेन तादृशोभयसामान्या-भावस्यैव निवेशनीयत्वादन्यथोभयप्रतियोगिकं घटविशिष्टतादृशोभयाभावमादाय सामान्यपद-दानेऽपि पर्वतपक्षकवह्नयभावव्याप्यसाध्यकस्थलेऽतिव्याप्तेर्दुर्वारत्वापत्तेः। तथा च वह्नयभाव-विशिष्टह्रदविषयिताप्रतियोगिकस्य कालिकेन ह्रदत्वविशिष्टधर्मिकवह्नयवगाहि-समवायेन ह्रदत्वविशिष्टधर्मिकवह्नयवगाहि—ज्ञानसाधारणह्रदत्वविशिष्टधर्मिकवह्नयवगाहिताद्वयसमुचित-निरुक्तोभयत्वपर्य्याप्तावच्छेदकताकप्रतियोगिताकाभावस्य तद्दोषविषयकनिश्चयोत्तरानुमिति-सामान्यान्तर्गतायां कालिकेन ह्रदत्वविशिष्टधर्मिकवह्नयनुमितावसत्त्वेनासम्भवस्य सुघटतया पक्षपदसार्थक्यात्। ननु पक्षपदनिवेशेऽपि निरुक्तोभयत्वपर्य्याप्तावच्छेदकताकप्रतियोगिताका-भावस्य यद्विषयकनिश्चयावृत्तिविषयिताप्रतियोगिताकपर्य्यवसिततया निर्वह्निः पर्वतो वह्निमानित्यत्र घटवद्गृहेऽतिव्याप्तिः। घटवद्गृहविषयकनिश्चयोत्तरानुमितित्वव्यापकनिरुक्तो-भयाभावस्य घटवद्गृहविषयकनिश्चयावृत्तिर्या घटाभाववद्गृहकालीन-निर्वह्निः पर्वतो वह्निमा-निति ज्ञानीया निर्वह्निधर्मिक-वह्नयवगाहिता तत्प्रतियोगिकत्वादिति चेन्न, निरुक्तोभयत्व-पर्य्याप्तावच्छेदकताकाभावे यद्विषयकनिश्चयवृत्तितानवच्छेदकधर्मावच्छिन्नप्रतियोगिताकत्वस्य विवक्षणान्न दोष इत्यवधेयम्।

तथा च यादृशविशिष्टविषयकनिश्चयोत्तरानुमितिसामान्य इत्यादिः फलितार्थ इति जगदीश-सन्दर्भे अनुमितीत्यत्र सामान्यपददानात् पर्वतो वह्नयभावव्याप्यवानित्यत्र वह्निमत्पर्वतेऽति-व्याप्तिस्तेन परिहृता। अत्र तावदियमुपपत्तिश्चिन्तनीया। न च वह्निमान् पर्वतो वह्नय-भावव्याप्यव्याप्यवांश्चेत्याहार्य्यनिश्चयसम्भवात् तादृशोभयाभावस्य तादृशनिश्चयावृत्तिविषयिता-प्रतियोगिकत्वविरहात् सामान्यपदानुपादानेऽपि नातिव्याप्तिरिति वाच्यम्, असम्भव-वारणायानाहार्य्यत्वस्याग्रे विवक्षणीयत्वादिति। यद्यपि निर्वह्निर्वह्निमानित्यादौ घटवद्-गृहादावतिप्रसङ्गभयेनाहार्य्यसामान्यभेदो न निवेशयितुं शक्यते, अपि तु तत्तदाहार्य्यव्यक्तिभेद एव। तथा च निर्वह्निर्वह्निमानित्याकारकाहार्य्यभेदनिवेशे नोक्तातिप्रसङ्गः। एवं वह्नय-भावव्याप्यसाध्यकस्थले तादृशाहार्य्यभेदानिवेशेनैव वह्निमत्पर्वते नातिप्रसङ्गः, तथापि पर्वत-

त्वावच्छेदेन वह्नेः साध्यत्वे तत्तत्पक्षस्तत्प्रतिपक्षेऽव्याप्तिवारणाय तादृशस्थले आहार्य्यभेदस्या-वश्यं निवेशनीयत्वात् पर्वतो वह्न्यभावव्याप्यवानित्यत्र वह्निमत्पर्वतेऽतिव्याप्तिवारणाय सामान्यपदस्य सार्थक्यसम्भवात्। केचित्तु स्वप्रयोज्यत्व-स्वाव्यवहितोत्तरज्ञानीयत्वोभयसम्बन्धे-नेच्छाविशिष्टान्यत्वं प्रकृतेऽनाहार्य्यत्वं। तच्च यद्रूपावच्छिन्नविषयतायामेव निवेश्यम्, उक्तस्थले चोक्तज्ञानीयवह्निमत्पर्वतविषयिताया निरुक्तोभयसम्बन्धेनेच्छाविशिष्टत्वादिच्छाविशिष्टान्य-वह्निमत्पर्वतविषयिताशालिनिश्चये तथाविधावगाहित्वाद्वयस्य सत्त्वेन तादृशोभयाभावस्येच्छा-वदन्ययद्रूपावच्छिन्नविषयिताशालिनिश्चयावृत्तिविषयिताप्रतियोगिकत्वस्यानपायाद् वह्निमत्-पर्वतेऽतिप्रसङ्गो दुर्वार इति सामान्यपदमुपादेयमेव। न च निर्वह्निर्वह्निमानित्यत्र वह्न्यभाव-वन्निर्वह्निरूपदोषेऽव्याप्तिः, वह्न्यभाववन्निर्वह्निर्वह्निमान् वह्निव्याप्यवांश्चेत्याकारकज्ञानीयदोष-विषयतायां निरुक्तोभयसम्बन्धेनेच्छाविशिष्टत्वविरहात् पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरू-पितसाध्यप्रकारितायां तद्व्याप्यप्रकारतायामेवेच्छाप्रयोज्यत्वस्वीकारेणैव निरुक्तज्ञानस्याहार्य्यत्व-निर्वाहात् दोषविषयतायामिच्छाप्रयोज्यत्वे मानाभावादिति वाच्यम्, समानधर्मिकविरोधि-द्वयविषयितायामिच्छाप्रयोज्यत्वनियमात् तादृशज्ञानीयदोषविषयितायामपि निरुक्तसम्बन्धे-नेच्छावैशिष्ट्यानपायादित्याहुः। परे तु—स्वाव्यवहितोत्तरज्ञानीयत्व-स्वावच्छिन्नावच्छेदकताक-प्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकावच्छिन्नत्वोभयसम्बन्धेनेच्छाविशिष्टयद्रूपाव-च्छिन्नविषयिताशून्यज्ञानवृत्तित्वं यद्रूपावच्छिन्नविषयितायां निवेश्यं, तादृशविषयितायां यद्रूपा-वच्छिन्नविषयतावहिर्भूतविषयित्वानिरूपितत्वमपि देयम्, अन्यथा निर्वह्निपर्वतो वह्निमानित्यादौ वह्न्यभावादावतिव्याप्तिः, तादृशोभयसम्बन्धेनेच्छावद्वह्न्यभावत्वावच्छिन्नविषयिताशून्यः वह्न्यभाव इत्याकारकनिश्चय एव, न तु निर्वह्निपर्वतो वह्निमानितिनिश्चय इति पक्षे साध्या-वगाहित्वस्य तत्रावृत्तित्वात्। एवं तादृशविषयिताशून्यज्ञानवृत्तियद्रूपावच्छिन्नविषयिताया-मपि निरुक्तविशेषणं देयम्। अन्यथा निर्वह्निः पर्वतो वह्निमानित्यत्र वह्निमत्पर्वतरूपाश्रया-सिद्धावव्याप्तिः। तादृशोभयसम्बन्धेनेच्छाविशिष्टा सती वह्निमत्पर्वतत्वावच्छिन्नविषयित्व-वहिर्भूतविषयित्वनिरूपिता या वह्निमत्पर्वतत्वावच्छिन्नविषयिता तच्छून्ये निर्वह्निः पर्वतो वह्निमानितिनिश्चये तादृशावगाहित्वस्य सत्त्वान्निरुक्तोभयाभावस्य विरोधिविषयिताप्रतियोगि कत्वविरहाद् बाधादिज्ञानस्येच्छाविरहविशिष्टनिश्चयत्वेनैव प्रतिबन्धकत्वादिच्छायाः प्रतिबन्ध-कतानवच्छेदकत्वादिति सर्वसामञ्जस्यमित्याहुः। तन्न, पर्वतो वह्निमान् वह्न्यभाव-व्याप्यवान् तद्व्याप्यवांश्चेत्याकारकाहार्य्य ज्ञानप्रयोजकीभूतेच्छावच्छिन्नावच्छेदकताकप्रतिबन्ध-कतावच्छेदकत्वस्य वह्निमत्पर्वतविषयितायामसत्त्वेन सामान्यपदव्यावृत्त्यसङ्गतेः। वह्निमान् वह्न्यभाववानित्यादौ वह्निविशिष्टवह्निमदात्मकबाधेऽव्याप्तेश्च वह्निमद्वह्निमत्त्वावच्छिन्नविषयि-

तायाः कुत्रापि बुद्धौ प्रतिबन्धकतानवच्छेदकत्वेन निरुक्तसम्बन्धेनेच्छाविशिष्टयद्रूपावच्छिन्न-विषयित्वाप्रसिद्धेः।

नव्यास्तु स्वानिरूपकज्ञानानिरूपकत्व-स्वावच्छेदकीभूतधर्मावच्छिन्नप्रकारतानिरूपितनिरवच्छिन्नावच्छेदकताकविशेष्यताशालिबुद्धित्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकमुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकावच्छिन्नत्व -- स्वनिरूपकज्ञाननिरूपितत्वैतत्त्रितय - सम्बन्धेन यत्किञ्चिद्विषयिताविशिष्टप्रकारताशालिज्ञानान्यज्ञानवृत्तियद्रूपावच्छिन्नविषयिताशालिज्ञानत्वं प्रकृतेऽनाहार्य्यनिश्चयत्वमतो न कोऽपि दोष इत्याहुः। न च वह्निमान् पर्वतो वह्न्यभावव्याप्यवान् नवेति संशयेऽपि तादृशावगाहित्वयोः सत्त्वात् तथापि नातिप्रसङ्ग इति

## जागदीशी

तथा च निर्वह्निर्वह्निमान् वह्निव्याप्यधूमवान् गृहं च घटवदित्यादिसमूहालम्बन एव व्यभिचारेण निर्वह्निधर्मिकवह्न्यवगाहित्वस्य वह्निव्याप्यधूमवत्तावगाहित्वस्य वा घटविशिष्टगृहादिनिश्चयत्वाभावव्याप्यत्वाभावान्निरुक्तावगाहिताद्वयव्यतिरेकस्य घटविशिष्टगृहादिनिश्चयत्वाभावव्याप्यविषयिताप्रतियोगिकत्वमेव नास्तीति न तत्र घटविशिष्टगृहादिकं दोषः, किन्तु वह्न्यभावादि-

## तात्पर्यदीपिका

वाच्यम्, ह्रदोवह्निमान् नवेति संशयवारणाय सामान्यतः संशयान्यत्वस्य निवेश्यत्वात्। संशयत्वञ्च स्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्व-स्वसामानाधिकरण्योभयसम्बन्धेन प्रकारताविशिष्टप्रकारताशालिज्ञानत्वम्। न च दोषांशे एव संशयान्यत्वं निवेशनीयमिति वाच्मम्, पर्वतो वह्न्यभावव्याप्यवानित्यादौ तादृशसंशयस्याप्रसिद्ध्या वह्निमत्पर्वतेऽतिव्याप्तेर्दुर्वारतापत्तेः, दोषांशे संशयान्यत्वादिति ध्येयम्। केचित्तु पर्वतो वह्न्यभावव्याप्यवानित्यादावित्यादिपदेन वह्न्यभावव्याप्यवत्पर्वतो घटवान् धूमादित्यत्र वह्निमत्पर्वतेऽतिव्याप्तिः सम्भवति। न च धर्मितावच्छेदकांशे संशयाकारकतद्वत्तानिश्चयावृत्तिविषयिताप्रतियोगिकत्वस्य निरुक्तोभयाभावे विरहान्नातिव्याप्तिरिति वाच्यम्, धर्मितावच्छेदकांशे संशयानङ्गीकारात् तादृशनिश्चयस्यासम्भवात्। वह्न्यभाववद्घटविषयकनिश्चयोत्तरं जातिमान् वह्निमानित्याद्यनुमितौ निरुक्तोभयाभावविरहादसम्भववारणाय निरुक्तावगाहिताद्वयशरीरे पक्षतावच्छेदकपर्याप्तावच्छेदकताकत्वनिवेशस्यावश्यकत्वेन धर्मितावच्छेदकांशे संशयस्वीकारेऽपि क्षतिविरहादिति प्राहुः।

## जागदीशी

विशिष्टोनिर्वह्न्यादिरेव तत्र दोषः। न च निर्वह्निधर्मिकवह्न्यवगाहिज्ञानसामान्य एव यादृशवस्तुनो न भानं तत्रातिव्याप्तितादवस्थ्यं, तादृशवस्तुनि मानाभावात्, एतदस्वरसेनैव वदन्तीत्यभिधानाच्च। यादृशविशिष्टविषयकज्ञानत्वाभावव्याप्यविषयिताप्रतियोगिक इत्युक्तावसम्भवः। पक्षधर्मिकसाध्यसंशयादौ पक्षधर्मिकसाध्यावगाहित्वादेः साध्याभावविशिष्टपक्षज्ञानत्वाद्यभावव्यभिचारित्वादतो निश्चयत्वानुसरणम्। अत्र निश्चयस्तत्तदाहार्य्यज्ञानभिन्नत्वेन विशेषणीयः, तेनाहार्य्यस्य साध्याभावादिमत्तया पक्षादिनिश्चयस्य पक्षादिधर्मिकसाध्यादिमत्तावगाहित्वेऽपि ह्रदो वह्निमान् धूमादित्यादौ न बाधप्रभृतावसम्भवः। यद्यपि पक्षधर्मिकसाध्यावगहित्वविशिष्टस्य तादृशसाध्यव्याप्यहेतुमत्त्वावगाहित्वस्य व्यतिरेकमन्तर्भाव्यापि लक्षणं सुवचं, तथापि यत्र स्थलविशेषे साध्य-तद्व्याप्यहेतुमत्त्वयोः पक्षे समूहालम्बनभ्रमोऽप्रसिद्धस्तत्रत्यदोषेऽव्याप्तिप्रसङ्गात्। विशिष्टाभावस्यातिरिक्तत्वमते विशेषणाप्रतियोगिकतया साध्याभावव्याप्यवत्पक्षेऽव्याप्तिप्रसङ्गाच्चेति निरुक्तविशिष्टाभावं परित्यज्य द्वयोरित्यनेनोभयाभावो निवेशितः।

न च समवेतं द्रव्यं मूर्त्तं स्पर्शवत्त्वादित्यत्र सद्धेतौ असमवेतत्वविशिष्टद्रव्येऽतिप्रसङ्गः, समवेतत्व-तदभावयोर्द्रव्यधर्मिकैकनिश्चयागोचरत्वादिति वाच्यम्, द्रव्यत्वावच्छेद्यत्वविशिष्टस्वरूपसम्बन्धेन समवेतत्वस्य पक्षतावच्छेदकत्वे तद्दोषस्येष्टत्वात्। स्वरूपसम्बन्धमात्रेण समवेतत्वस्य पक्षतावच्छेदकत्वप्रवेशे तु तादृशपक्षधर्मिकसाध्यावगाहित्वस्यासमवेतत्वविशिष्टद्रव्यनिश्चयत्वाभाव--व्याप्यत्वविरहादेव उक्तस्थले समवेतत्वाद्यभावविशिष्टद्रव्यस्य दोषत्वासम्भवात्। द्रव्यं द्विविधं समवेतमसमवेतं चेत्याकारकस्य द्रव्यत्वसामानाधिकरण्येन समवेतत्व-तदभावयोर्निश्चयस्य सर्वानुभवसिद्धत्वादेकधर्मावच्छेदेनैव विरोधिनोरेकनिश्चयाविषयत्वात्। इदं तु बोध्यम्;—अत्रापि प्रमेयत्वविशिष्टव्यभिचारादावतिप्रसङ्गवारणाय तादृशविशिष्टान्तराघटितत्वविशेषणं देयमेव। तस्य च प्रकृतलक्षणाश्रयीभूतं यत् स्वभिन्नं तदघटितान्यत्वं नार्थः।

## तात्पर्यदीपिका

विशिष्टान्तराघटितत्वविशेषणं देयमिति। न चात्र कल्पे ( विशिष्टान्तराघटितत्व-

विशेषणादानकल्पे) सामान्यपदं व्यर्थं, पर्वतो वह्न्यभावव्याप्यवानित्यत्र वह्निमत्पर्वतस्य वस्तुगत्या हेत्वाभासत्वविशिष्टाद् भिन्नत्वेन तद्घटितत्वेन च नातिव्याप्तिरिति वाच्यम्, पर्वतो वह्न्यभावव्याप्यवान् वह्निमत्पर्वतकालीनधूमाभावादित्यत्र वह्निमत्पर्वतरूपासिद्धौ प्रकृतलक्षणाश्रयीभूतेन वस्तुगत्या हेत्वाभासत्वविशिष्टाद् भिन्नेन वह्निमत्पर्वतेन घटितत्वादव्याप्तिवारणाय सामान्यपदसार्थक्यात्। यद्यपि सामान्यपददानेऽपि तत्राव्याप्तिः सुघटैव। पर्वतो वह्न्यभावव्याप्यवान् वह्न्यभावव्याप्यव्याप्यवह्निमत्पर्वतकालीनधूमाभाववांश्चेत्यस्याहार्य्यत्वात् तथापि पर्वतो वह्न्यभावव्याप्यवान् पर्वतीयवह्न्यभावादित्यत्र पर्वतीयवह्निमत्पर्वतरूपस्वरूपासिद्धौ वह्निमत्पर्वतेन घटितत्वादव्याप्तिवारणाय सामान्यपदसार्थक्यादिति ध्येयम्। न च प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र व्यभिचारस्य वस्तुगत्या हेत्वाभासभिन्नेनाभाववद्वृत्तिप्रमेयत्वेन घटितत्वादव्याप्तिरिति वाच्यम्, गृहे घटसामान्याभावे साध्ये गृहस्य नीलघटवत्त्वरूपबाधस्येव तस्य लक्ष्यत्वाद् वस्तुगत्या हेत्वाभासत्वविशिष्टाद्भिन्नत्वविरहादित्यभिमानः। न च तथापि विरोधिविषयिताप्रयुक्तत्वनिवेशो व्यर्थः, निर्वह्निर्वह्निमानित्यत्र घटवद्गृहस्य हेत्वाभासत्वविशिष्टाद्भिन्नेन स्वेनैव घटितत्वान्नातिव्याप्तिरिति वाच्यम्, निर्वह्नि-

## जागदीशी

**प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ व्यभिचारस्य तादृशस्वभिन्नबाधादिघटितत्वेनाव्याप्त्यापत्तेः। किन्तु निरुक्तलक्षणाश्रयीभूतं वस्तुगत्या यद्विशिष्टान्तरं हेत्वाभासत्वविशिष्टाद् भिन्नं तदघटितत्वमेव।**

### तात्पर्यदीपिका

र्वह्निमानित्यत्र वह्न्यभाववन्निर्वह्निरूपे दोषेऽव्याप्तिः, तस्य प्रकृतलक्षणाश्रयीभूतेन वह्न्यभावरूपहेत्वाभासभिन्नेन घटितत्वादिति। न च तथापि धूमाभाववद्धूमव्यभिचारिवह्निमद्रूपबाधेऽव्याप्तिः, प्रकृतलक्षणाश्रयीभूतेत वस्तुगत्या हेत्वाभासभिन्नेन धूमव्यभिचारिवह्निमत्त्वेन घटितत्वादिति चेदेतदक्षरसेनैव वस्तुतस्तु-कल्पानुसरणादिति।

**किन्त्विति।** विशिष्टान्तराघटितस्य चेदेवमर्थो विधीयते तदा यथोक्तलक्षणवाक्यस्थस्य 'यादृशविशिष्टविषयकनिश्चयोत्तरानुमितिसामान्य' इत्यत्र सामान्यपदस्य यादृशविशिष्टविषयकनिश्चयावृत्तिविषयिताप्रतियोगिकेत्यस्य च वैयर्थ्यापत्तिः। सामान्यपदानुक्तौ यद् वह्न्यभावव्याप्यस्य साध्यतायां वह्न्यभावव्याप्यहेतुतास्थले वह्निविशिष्टपर्वतेऽतिव्याप्तिरित्युक्तं, तच्च नाधुना सम्भवति, यतो वह्निविशिष्टपर्वतरूपतादृशविशिष्टव्यक्तेरुक्तप्रकारतादृशविशिष्टान्तरेण स्वेनैव

घटितत्वात्। यादृशविशिष्टविषयकनिश्चयावृत्तिपदस्यानुक्तौ च निर्वह्निर्वह्निमान् धूमादित्यत्र घटविशिष्टगृहादावतिव्याप्तिर्दत्ता जगदीशेन; सापि नाधुना सम्भवति, घटविशिष्टगृहादि-रूपतादृशविशिष्टव्यक्तेरपि उक्तप्रकारतादृशविशिष्टान्तरेण स्वेनैव घटितत्वात् तत्र लक्षण-गमनासम्भवादिति। न च विशिष्टान्तराघटितत्वघटकप्रकृतलक्षणे सामान्यपदस्य विरोधिविषयिताप्रतियोगिकत्वस्य निवेश्यतया वह्निवत्पर्वतस्य घटवद्गृहस्य च प्रकृतलक्षणा-श्रयीभूतत्वाभावेन तादृशविशिष्टान्तरत्वाभावादुक्तातिव्याप्तिवारणायैव तत्सार्थक्यमिति वाच्यम्, अतिव्याप्तिदानार्थं विशिष्टान्तराघटितत्वघटकप्रकृतलक्षणे तन्निवेशनानौचित्यात्। न च पर्वतो वह्न्यभावव्याप्यवान् वह्निमत्पर्वतकालीनधूमाभावादितिस्थलीयस्वरूपासिद्धा-वव्याप्तिवारणाय विशिष्टान्तराघटितत्वघटकप्रकृतलक्षणे सामान्यपदमावश्यकमन्यथा सामान्य-पदघटितप्रकृतलक्षणाश्रयीभूतेन हेत्वाभासभिन्नेन वह्निमत्पर्वतरूपेण घटितत्वात् तत्रत्य-स्वरूपा-सिद्ध्यसंग्रहापत्तेरिति वाच्यं, सामान्यपदप्रदानेऽपि तत्राव्याप्तेर्दुरुद्धरत्वात्, पर्वतो वह्न्य-भ.वव्याप्यव्याप्यवह्निमत्पर्वतकालीनधूमाभाववांश्चेत्याकारकानुमित्यप्रसिद्धेरिति चेन्न, पर्वतो-वह्न्यभावव्याप्यवान् पर्वतीयवह्नेरित्यत्र सामान्यपदघटितप्रकृतलक्षणाश्रयीभूतेन हेत्वाभास-भिन्नेन वह्न्यभावादिना घटितत्वात् तत्राव्याप्तिवारणाय सामान्यमित्युक्तम्। वह्न्यभाववान् निर्वह्निरितिवाधेऽव्याप्तिवारणाय विरोधिविषयित्ताप्रयुक्तत्वस्य विशिष्टान्तराघटितत्वघटक-प्रकृतलक्षणे निवेशस्यावश्यकध्रौव्ये उक्तातिव्याप्तिवारणाय विशेष्यदलेऽपि तन्निवेशस्यावश्यक-त्वात्। स्वस्यापि स्वघटितत्वेन मेयत्वविशिष्टव्यभिचारादौ तादृशविशिष्टान्तराघटितत्वं बोध्यं, शुद्धव्यभिचारादेः स्वत्वघटितत्वेऽपि हेत्वाभासत्वविशिष्टभिन्नरूपतादृशविशिष्टान्तरा-घटितत्वमक्षतमेव। एवं प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादौ वाधघटितव्यभिचारेऽपि न काचिदनुपपत्तिरिति वृत्तिप्रमेयत्वरूपस्य सामानाधिकरण्येन वह्न्यभाववद्ह्रदस्य वा तादृश-विशिष्टान्तरत्वाभावादिति ध्येयम्।

**वस्तुगत्या यद्विशिष्टान्तरमित्यस्य** हेत्वाभासत्वविशिष्टाद् भिन्नमित्यर्थः, न तु विशिष्टान्तरमपि प्रवेश्यं "वस्तुगत्या" इत्युक्त्या अस्यापि विशिष्टत्वं सूचितं किन्तु परिचायकत्वमात्रमिति।

तादृशनिरुक्तलक्षणाश्रयीभूतं वस्तुगत्या यद्विशिष्टान्तरमित्यादि। यादृशविशिष्ट-विषयकनिश्चयोत्तरानुमितिसामान्ये यादृशविशिष्टविषयकनिश्चयावृत्तिविषयिताप्रतियोगिकः प्रकृत-पक्षे प्रकृतसाध्यावगाहित्वस्य साध्यव्याप्यहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यतिरेकः हेत्वाभासत्व-विशिष्टभिन्नतादृशविशिष्टाघटितत्वे सति यादृशविशिष्टविषयकनिश्चयोत्तरानुमिति-सामान्ये यादृशविशिष्टविषयकनिश्चयावृत्तिविषयिताप्रतियोगिकस्तादृशोभयाभावस्तादृशविशिष्टत्व-

मिति फलितार्थः। अत्र पर्वतो वह्न्यभावव्याप्यवान् प्रमेयवह्न्यभावादित्यत्र प्रमेयवह्निमत्पर्वत-रूपस्वरूपासिद्धयादावव्याप्तिस्तादृशविशिष्टान्तरवह्निमत्पर्वतघटितत्वादतस्तद्वारणाय सत्यन्तदले प्रतियोगिकान्तदलम्। ननु धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमाभाववद्धूम-व्यभिचारिवह्निमत्स्वरूपबाधेऽव्याप्तिः। निरुक्तलक्षणाश्रयीभूतहेत्वाभासत्वविशिष्टभिन्नं यत्-धूमव्यभिचारिवह्निमत्त्वविशिष्टत्वं तद्घटितान्यत्वविरहात्। एवं पर्वतो वह्न्यभाव-व्याप्यवान् पर्वतीयवह्न्यभावादित्यत्र पर्वतीयवह्निमत्पर्वतेऽव्याप्तिस्तादृशवह्निमद्घटितान्यत्व-विरहादित्ति चेदेतदस्वरसेनैव वस्तुत इति कल्पादरः।

## जागदीशी

**वस्तुतो यद्विषयकनिश्चयत्वविरोधियादृशविषयिताप्रतियोगिको निरुक्तो-भयव्यतिरेकस्तदन्ययद्विषयकनिश्चयत्वविरोधितादृशविषयिताप्रतियोगिकस्त-थाविधविशिष्टाघटितत्वमेव तादृशविशिष्टान्तराघटितत्वमित्यस्यार्थो बोध्य इति न निरुक्ताव्याप्त्याद्यवकाशः।**

## तात्पर्यदीपिका

ननु विरोधिविषयिताप्रयुक्तत्वनिवेशो व्यर्थः, निर्वह्निपक्षकवह्निसाध्यकस्थले घटवद्गृहस्य हेत्वाभासभिन्नेन स्वेनैव घटितत्वात् तत्रातिव्याप्तिप्रसङ्गानवकाशादिति चेन्न, निरुक्त-स्थलीयवह्न्यभाववन्निर्वह्निरूपबाधस्य वह्न्यभावात्मकविशिष्टान्तरेण घटितत्वात् तत्राव्याप्त्या-पत्तेः, वह्न्यभावविषयकनिश्चयोत्तरानुमितित्वावच्छेदेन निर्वह्नित्वविशिष्टे वह्न्यवगाहिता-घटितोभयाभावस्य वर्तमानत्वात्। तन्निवेशे तु निर्वह्नित्वविशिष्टे वह्न्यवगाहिताघटित-निरुक्तोभयाभावे नानाहार्यवह्न्यभावत्वावच्छिन्नविषयकनिश्चयत्वाभावव्याप्यविषयिताप्रति-योगिकत्वं कदाचिन्निर्वह्निर्वह्निमान् वह्निव्याप्यवान् वह्न्यभावश्चेत्तिनिश्चयस्यापि सम्भवात् निर्वह्नौ वह्न्यवगाहिताया अनाहार्य्यवह्न्यभावविषयकनिश्चयत्वाभावव्याप्यत्वविरहान्नोक्तबाधेऽव्याप्तिः।

अथावृत्तित्वाभाववद्वृत्तिप्रमेयत्वात्मकव्यभिचारस्य वस्तुगत्या हेत्वाभासभिन्नेनाभाववद्-वृत्तिप्रमेयत्वेन घटितत्वादव्याप्तिरिति चेन्न, गृहपक्षकघटसामान्याभावसाध्यकस्थलीयनीलघट-वद्गृहस्य बाधत्ववदस्यापि लक्ष्यत्वेन हेत्वाभासभिन्नत्वविरहादिति।

अत्र कल्पे यद्विषयकनिश्चये तदन्ययद्विषयकनिश्चये च पक्षधर्मिकप्रकृतसाध्यव्यापकीभूता-भावप्रतियोगिहेतुमत्तानिश्चयान्यत्वासाधारण्यविषयकत्वोभयाभाववत्त्वं निवेश्यं। तेन साध्य-व्यापकीभूताभावप्रतियोगिहेतुमान् पक्ष इति निश्चयमादायैव साध्यव्यापकीभूताभावप्रति-योगिरूपासाधारण्ये लक्षणसमन्वयान्नासाधारण्याव्याप्तिरिति चिन्तनीयम्।

'वस्तुतस्तु'—इत्यादि-जगदीशग्रन्थे प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादावव्वृत्तित्वाभाववद्वृत्ति-प्रमेयत्वरूपनिरुक्तव्यभिचारेऽव्याप्तिः। निरुक्तोभयाभावप्रतियोगिव्यभिचारविषयकनिश्चयावृत्ति-प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेतुमत्पक्षावगाहित्वस्य प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य च वृत्तिप्रमेयत्वरूपबाधविषयकनिश्चयावृत्तित्वेन बाधात्मकविशिष्टान्तरघटितत्वात्। एवं यत्र ह्रदत्वा-वच्छेदेन वह्नेः पक्षतावच्छेदकत्वं तत्र वह्निमद्ह्रदो वह्निमानित्यादौ ह्रदत्वावच्छेदेन वह्न्यभाव-वद्ध्रदात्मकबाधादावव्याप्तिः, ह्रदत्वसामानाधिकरण्येन वह्न्यभाववद्ध्रदात्मकाश्रयागिद्धिरूपेण तादृशविशिष्टान्तरेण घटितत्वात्। एवं धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र धूमाभाव-वद्धूमव्यभिचारिवह्निमदात्मकबाधेऽव्याप्तिश्च; निरुक्तोभयाभावप्रतियोगिनो निरुक्तबाधविषयक-निश्चयावृत्तिप्रकृतसाध्यव्याप्यहेतुमत्तावगाहित्वस्य केवलव्यभिचारविषयकनिश्चयावृत्तित्वाद् व्यभिचारात्मकविशिष्टान्तरेण घटितत्वात्। न च यद्विषयकनिश्चयवृत्तितानवच्छेदकयादृशधर्म-घटितधर्मावच्छिन्नप्रतियोगिताको निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयोत्तरानुमितिसामान्ये तदन्य-यद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशधर्मावच्छिन्नप्रतियोगिताको निरुक्तोभयाभाव-स्तदघटितत्वस्य विवक्षणान्न प्रागुक्तदोषाणामवकाशः। प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र तादृश-धर्मान्तर्गतस्य साध्यव्याप्यहेतुमत्तावगाहितात्वस्य वृत्तिप्रमेयत्वरूपबाधविषयकनिश्चयवृत्तितानव-च्छेदकत्वविरहेण वृत्तिप्रमेयत्वस्य वह्निमद्ध्रदो वह्निमानित्यत्र तादृशधर्मान्तर्गतस्य ह्रदत्वसामानाधि-करण्येन वह्न्यवगाहितात्वस्य सामानाधिकरण्येन वह्न्यभाववद्ध्रदविषयकनिश्चयवृत्तितानवच्छेद-कत्वविरहेण सामानाधिकरण्येन वह्न्यभाववद्ध्रदस्य च तथा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र तादृशधर्मान्तर्गतस्य पक्षधर्मिकसाध्यावगाहितात्वस्य व्यभिचारविषयकनिश्चयवृत्ति-तानवच्छेदकत्वविरहेण व्यभिचारस्य विशिष्टान्तरत्वाभावादिति वाच्यं, बाधविशिष्ट-व्यभिचारादावतिव्याप्त्यापत्तेः। तत्र बाधविशिष्टव्यभिचारविषयकनिश्चयवृत्तितानवच्छेदक-यादृशधर्मघटितधर्मावच्छिन्नप्रतियोगिताको निरुक्तोभयाभावः, तादृशधर्मान्तर्गतं पक्षे साध्या-वगाहितात्वं हेतौ व्याप्त्यवगाहितात्वं द्वयमेव। तादृशधर्मद्वये च बाधविषयकनिश्चय-वृत्तितानवच्छेदकत्वस्य केवलव्यभिचारविषयकनिश्चयवृत्तितानवच्छेदत्वस्य च विरहेण केवल-बाधस्य केवलव्यभिचारस्य च विशिष्टान्तरत्वाभावाद् व्यभिचारविशिष्टबाधस्यैव तादृश-विशिष्टान्तरतया बाधविशिष्टव्यभिचारस्य तदघटितत्वादिति चेन्न, स्वावच्छिन्नविषयक-निश्चयवृत्तितानवच्छेदकीभूतनिरुक्तोभयाभावीय-प्रतियोगितावच्छेदकं यत्किञ्चिद्रूपं स्वभिन्न-यद्रूपावच्छिन्नविषयकनिश्चयवृत्तितानवच्छेदकं तद्रूपावच्छिन्नाघटितत्वस्य लक्ष्यतावच्छेदके निवेशनीयत्वात्। अवच्छेदकत्वमत्रावच्छेदकतावच्छेदकसाधारणं बोध्यम्। तथा च प्रमेयत्वमवृत्ति

प्रमेयत्वादित्यत्र प्रकृतसाध्यव्याप्यहेत्ववगाहितात्वं वह्निमद्ध्रदो वह्निमानित्यत्र ह्रदत्वसामानाधिकरण्येन वह्न्यवगाहितात्वं धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यत्र प्रकृतपक्षे धूमावगाहितात्वं च यत्किञ्चित्पदेनोपादाय तादृशावगाहितात्वादिकं न स्वभिन्नव्यभिचारविषयकनिश्चयवृत्तितानवच्छेदकं किन्तु स्वभिन्नव्यभिचारादिव्याप्यवद्धेत्वादिविषयकनिश्चयवृत्तितानवच्छेदकं तदघटितत्वस्य सत्त्वान्निरुक्तव्यभिचारादौ लक्षणसमन्वयः। अत एव प्रतियोगित्वाभाववज्जलवद्ध्रदपक्षक-वह्निसाध्यकस्थले वह्निव्यापकीभूताभावप्रतियोगिजलवद्ध्रदात्मकासाधारणे नाव्याप्तिः शुद्धह्रदत्वविशिष्टे वह्न्यवगाहितात्वमादाय लक्षणसमन्वयात् प्रतियोगित्ववज्जलादेस्तथाविधविशिष्टान्तरत्वाभावादवच्छेदकावच्छेदेन साध्यवत्पक्षादिकं लक्ष्यमेवेति ध्येयम्।

अथात्र कल्पे यद्विषयकनिश्चयावृत्तियादृशविषयिताप्रतियोगिको निरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयावृत्तितादृशविषयिता तदघटितत्वमित्यस्यैव सम्यक्त्वे तादृशविषयिताप्रतियोगिक इत्यस्य निवेशो व्यर्थः। न च पर्वतः कपिलवह्न्यभाववान् वह्न्यभावव्याप्यवत्त्वादित्यत्र कपिलवह्निमत्पर्वतरूपबाधविषयकनिश्चयावृत्तिर्यो तादृशहेतुमत्त्वावगाहिता तत्प्रतियोगिकस्तादृशोभयाभावः; तादृशहेत्ववगाहितायाः तदन्यवह्निमत्पर्वतविषयकनिश्चयावृत्तित्वेन वह्निमत्पर्वतस्यापि विशिष्टान्तरतया निरुक्तबाधस्य तद्घटितत्वादव्याप्तिवारणाय प्रतियोगिकइत्यन्तेन तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकस्तदन्य-यद्विषयकनिश्चयावृत्तिविषयिताप्रतियोगिकोनिरुक्तोभयाभावस्तदघटितत्वस्य विवक्षणीयतया न तद्वैयर्थ्यमिति। तथा च यद्विषयकनिश्चयोत्तरानुमितित्वव्यापको यद्विषयकनिश्चयवृत्तितानवच्छेदकीभूत-यादृशधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावः, तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकीभूततादृशधर्मघटितधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावः, तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकः तदघटितत्वमित्यस्य पर्य्यवसिततया उक्तस्थले हेतुवैशिष्ट्यावगाहितात्वस्य वह्निमत्पर्वतविषयकनिश्चयवृत्तितावच्छेदकत्वेऽपि हेतुवैशिष्ट्यावगाहितात्वघटितधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावस्य वह्निमत्पर्वतविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वाभावेन वह्निमत्पर्वतस्य तादृशविशिष्टान्तरत्वाभावादुक्ताव्याप्तिवारकतयैव तस्य सार्थक्यादिति वाच्यम्, तन्निवेशेऽपि प्रमेयत्वमवृत्ति प्रमेयत्वादित्यादावव्याप्तिवारणाय यद्विषयकनिश्चयोत्तरानुमितिसामान्ये यद्विषयकनिश्चयवृत्तितानवच्छेदकयादृशयत्किञ्चिद्धर्मघटितधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावस्तदन्ययद्विषयकनिश्चयोत्तरानुमितिसामान्ये तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशयत्किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावः तदघटितत्वस्यावश्यं विवक्षणीयतया प्रमेयत्वमवृत्ति प्रमेयत्वादित्यत्र प्रकृतसाध्यनिरूपितव्याप्तिविशिष्टहेत्ववगाहितात्वं यत्किञ्चित्पदेनोपादाय तादृशावगाहितात्वं न निरुक्तव्यभिचारादिवृत्तिप्रमेयत्वादिविषयकनिश्चयवृत्तितान-

वच्छेदकं किन्तु तद्भिन्नतादृशव्यभिचारादिव्याप्यवद्धेत्वादिनिश्चयवृत्तितानवच्छेदकमेवेति तादृशव्याप्यविशिष्टहेत्वादिकमेव तादृशविशिष्टान्तरं तदघटितत्वस्योक्तव्यभिचारादौ सत्त्वान्न कोऽपि दोष इति निष्कृष्टकल्पेऽपि यद्विषयकनिश्चयवृत्तितानवच्छेदकधर्मघटितधर्मावच्छिन्न-प्रतियोगिताकनिरुक्तोभयाभावस्तादृशयत्किञ्चिद्धर्मस्तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकस्तद-घटितत्वविवक्षणेनैव पर्वतः कपिलवह्न्यभाववान् वह्न्यभावव्याप्यादित्यादौ कपिलवह्निमत्-पर्वतरूपबाधेऽव्याप्तिवारणं सम्भवति तादृशबाधविषयकनिश्चयवृत्तितानवच्छेदक-यादृशधर्मा-वच्छिन्नप्रतियोगिताकनिरुक्तोभयाभावः, तादृशयत्किञ्चित्पदेन तादृशसाध्यावगाहितात्व-मादायैव तत्र विशिष्टान्तराघटितत्वसम्भवात् प्रतियोगिक इत्यस्य निरर्थकत्वादिति ।

न चाभावोऽवृत्तित्वव्याप्यवानित्यत्राभाववृत्ति — अवृत्तित्वव्याप्याभावात्मकबाधेऽव्याप्ति-स्तादृशबाधविषयकनिश्चयवृत्तितानवच्छेदकतादृशोभयाभावप्रतियोगितावच्छेदक-साध्यावगाहिता-त्वस्य तदन्यवृत्त्यभावविषयकनिश्चयवृत्तितानवच्छेदकत्वेनोक्तबाधस्य वृत्त्यभावरूपविशिष्टान्तर-घटितत्वादतस्तद्दलमावश्यकमिति वाच्यं, साध्यव्याप्यहेतुमत्पक्षावगाहितात्वस्यापि निरुक्तो-भयाभावप्रतियोगितावच्छेदकस्य तादृशबाधनिश्चयवृत्तितानवच्छेकत्वेन तादृशपक्षावगाहितात्व-मादायैव तत्रापि लक्षणसमन्वयादिति चेन्न, अभावः प्रमेयवान् अवृत्तित्वव्याप्यादित्यत्रा-भाववृत्ति—अवृत्तित्वव्याप्याभावस्वरूपस्वरूपासिद्धावव्याप्तिवारणायैव तद्दलसार्थक्यादन्यथा तादृशोभयाभावप्रतियोगितावच्छेदकीभूत - हेतुमत्पक्षावगाहितात्वस्यैव तादृशस्वरूपासिद्धि-भिन्नवृत्त्यभावनिश्चयवृत्तितानवच्छेदकत्वाद् वृत्त्यभावरूपविशिष्टान्तरघटितत्वात् तादृशस्वरूपा-सिद्धेरसंग्रहः स्यात् । प्रतियोगिकान्तनिवेशे च हेतुमत्पक्षावगाहितात्वस्य वृत्त्यभाव-निश्चयवृत्तितानवच्छेदकत्वेऽपि तादृशावगाहितात्वघटितधर्मावच्छिन्नप्रतियोगिताकनिरुक्तोभया-भावस्य वृत्त्यभावनिश्चयोत्तरानुमितित्वव्यापकत्वाभावान्नाव्याप्तिरिति भावः । यद्यपि प्रति-योगिकान्तनिवेशेऽभावो धूमान्यधूमवान् अवृत्तित्वव्याप्यादित्यत्राभाववृत्ति- अवृत्तित्वव्याप्या-भावरूपस्वरूपासिद्धावव्याप्तिर्दुर्वारैव, तादृशोभयाभावप्रतियोगितावच्छेदकतादृशस्वरूपासिद्धि-निश्चयवृत्तितानवच्छेदकीभूत-हेतुमतपक्षावगाहितात्वस्य तदन्यवृत्त्यभावनिश्चयवृत्तितानवच्छेद-कत्वाद्वृत्त्यभावनिश्चयोत्तरानुमितित्वव्यापकतादृशोभयाभावप्रतियोगितावच्छेदकत्वाच्च वृत्त्यभाव-स्यापि तादृशविशिष्टान्तरत्वात् तथापि तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदक-तादृशयत्-किञ्चिद्धर्मघटितधर्मावच्छिन्ननिरुक्तोभयाभावमपहाय तदन्य-यद्विषयकनिश्चयोत्तरानुमितिसामान्ये तादृशनिश्चयवृत्तितानवच्छेदक-तादृशयत्किञ्चिद्धर्मावच्छिन्नप्रतियोगिताकाभावः तद्घटितत्वस्य विवक्षणान्न दोषः । वृत्त्यभावनिश्चयोत्तरानुमितिसामान्ये वृत्त्यभावनिश्चयवृत्तितानवच्छेदक-हेतुमत्पक्षावगाहितात्वरूपतादृशधर्मघटितधर्मावच्छिन्न-निरुक्तोभयाभावसत्त्वेऽपि तादृशावगा-

हितात्वावच्छिन्नप्रतियोगिताकाभावासत्त्वादेव वृत्त्यभावस्य तादृशविशिष्टान्तरत्वाभावादिति। न चैवं मेयत्वविशिष्टवह्न्यभाववद्ध्रदादावतिव्याप्तिः। यत्किञ्चित्पदेन तादृशोभयाभावप्रतियोगितावच्छेदकमेयत्वविशिष्टवह्न्यभाववद्ध्रदादिनिश्चयवृत्तितानवच्छेदकसाध्यव्याप्यहेतुमत्पक्षावगाहित्वमादाय तत्र विशिष्टान्तराघटितत्वसत्त्वात् तादृशपक्षावगाहितात्वावच्छिन्नाभावस्य तदन्य-अवृत्त्यभाववद्ध्रदादिविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वेन वह्न्यभाववद्ध्रदादेस्तादृशविशिष्टान्तरत्वाभावादिति वाच्यं, दीधित्युक्तलक्षणेऽपि यद्विषयकनिश्चयोत्तरानुमितिसामान्ये तादृशोभयाभावमपहाय यद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशोभयाभावप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात्। तथा च यद्विषयकनिश्चयोत्तरानुमितित्वव्यापकनिरुक्तोभयाभावप्रतियोगितावच्छेदकीभूत-यद्विषयकनिश्चयवृत्तितानवच्छेदक-यादृशधर्मावच्छिन्नप्रतियोगिताकाभावः, तदन्ययद्विषयकनिश्चयवृत्तितानवच्छेदकतादृशधर्मावच्छिन्नप्रतियोगिताकाभावः, तदन्ययद्विषयकनिश्चयोत्तरानुमितित्वव्यापकस्तदघटितत्वमित्यर्थस्य पर्य्यवसिततया साध्यव्याप्यहेतुमत्पक्षावगाहितात्वस्य मेयत्वविशिष्टबाधनिश्चयवृत्तितानवच्छेदकत्वेऽपि तादृशावगाहितात्वावच्छिन्नाभावस्य तादृशबाधनिश्चयोत्तरानुमितित्वाव्यापकत्वेन यादृशधर्मपदेन साध्यव्याप्यहेतुमत्पक्षावगाहितात्वस्य धर्तुमशक्यत्वेन साध्यावगाहितात्वस्यैव धर्तव्यतया तस्य च शुद्धाभावनिश्चयवृत्तितानवच्छेदकतादृशनिश्चयोत्तरानुमितित्वव्यापकाभावप्रतियोगितावच्छेदकत्वं चाक्षतमेवेति वह्न्यभाववद्ध्रदत्वस्य तादृशविशिष्टान्तरत्वेनोक्तातिव्याप्तिरिति भावः। न चैवं पर्वतो वह्न्यभावव्याप्यजलवान् निर्जलत्वादित्यादौ वह्निमत्पर्वतादौ जगदीशस्यास्वरसबीजाभिधानासङ्गतिः, अत्रोभयाभावप्रतियोगितावच्छेदकवह्निमत्पर्वतादिनिश्चयवृत्तितानवच्छेदकीभूतसाध्यावगाहितात्वावच्छिन्नाभावस्य वह्निमत्पर्वतादिनिश्चयोत्तरानुमितित्वाव्यापकत्वेन तत्रातिव्याप्त्यसम्भवादिति वाच्यं, तत्रातिव्याप्त्यसम्भवेऽपि धूमान्यधूमवान् वह्न्यभावव्याप्यादित्यादौ वह्निमत्पर्वतादावेवातिव्याप्तेस्तात्पर्य्यात्। तत्र वह्निमत्पर्वतनिश्चयोत्तरानुमितित्वावच्छेदेनैव तादृशनिश्चयवृत्तितानवच्छेदकीभूतोभयाभावप्रतियोगितावच्छेदकधूमव्याप्यवत्-पक्षावगाहितात्वावच्छिन्नाभावस्य सत्त्वाद्धूमान्यधूमव्याप्यवह्न्यभावव्याप्यवानित्याकारकानुमितेरप्रसिद्धत्वादिति ध्येयम्। अत्र कल्पे यद्विषयकनिश्चये तदन्ययद्विषयकनिश्चये च पक्षधर्मिकसाध्यव्यापकीभूताभावप्रतियोगिहेतुनिश्चयान्यत्वासाधारण्यविषयकत्वोभयाभाववत्त्वं निवेशनीयम्। तेन साध्यव्यापकीभूताभावप्रतियोगिहेतुमान् पक्ष इत्याकारकनिश्चयमादायैव साध्यव्यापकीभूताभावप्रतियोगिहेतुरूपासाधारण्ये लक्षणसमन्वयान्नासाधारण्यासंग्रहः, न वा प्रमेयत्वविशिष्टासाधारण्येऽतिव्याप्तिः। न च गृहादौ घटसामान्याभावे साध्ये नीलघटवद्गृहादावव्याप्तिः, तस्य

## जागदीशी

यदि च नव्यानां मते साध्याभाववदवृत्तित्वरूपाया एव व्याप्तेरनुमित्युपयोगित्वात् तादृशव्याप्तिविशिष्टप्रकृतहेतुमत्तावगाहित्वमेव लक्षणे निवेश्यते तदा प्रकृतपक्षतावच्छेदकविशिष्टपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यीयतादृशव्याप्तिविशिष्टहेतुमत्तावगाहित्वस्य प्रकृतसाध्यीयव्यतिरेकव्याप्तिविशिष्टहेतुमत्तावगाहित्वस्य च त्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयत्वविरोधिविषयिताप्रतियोगिकस्तद्धर्मावच्छेदेन एव तादृशधर्मविशिष्टः प्रकृतपक्षतावच्छेदकविशिष्टपक्षक-प्रकृतहेतुसाध्यकन्यायस्थले दोषो वक्तव्यः

घटवद्गृहस्वरूपनिरुक्तविशिष्टान्तरेण घटितत्वादिति वाच्यम्, यादृशयादृशप्रामाण्यज्ञानाभावविशिष्टयद्रूपावच्छिन्नविषयकनिश्चयावृत्तितादृशविषयिताप्रतियोगिको निरुक्तोभयाभावस्तादृशाप्रामाण्यज्ञानाभावविशिष्ट - तद्रूपावच्छिन्नान्य - यद्रूपावच्छिन्नविषयकनिश्चयावृत्ति - तादृशविषयिताप्रतियोगिकस्तद्रूपावच्छिन्नाघटितत्वमित्यर्थकरणात् गृहं नीलघटवदिदं घटाभाववति घटप्रकारकमित्यादिज्ञानस्यानुत्तेजकतया नीलघटाभाववति नीलघटप्रकारकमित्याकारकाप्रामाण्यग्रहाभावविशिष्ट-घटाभाववति घटप्रकारकमित्याद्यप्रामाण्यज्ञानविशिष्ट-गृहं घटवदितिज्ञाने तादृशविषयितायाः अवृत्तित्वविरहेण एवं रीत्या विशेषगुणाभाववान् घटो-गुणसामान्याभाववानित्यादौ विशेषगुणवद्घटेऽव्याप्तिर्वारणीयेति कृतं पल्लवितेन।

यदि च नव्यानां मते साध्याभाववदवृत्तित्वरूपाया एवानुमित्युपयोगित्वात् तादृशव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वस्य त्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयावृत्तिविषयिताप्रतियोगिकः, तद्धर्मावच्छेदेन तादृशधर्मवत्त्वं प्रकृतसाध्यहेतुकन्यायस्थले दोष इति जगदीशग्रन्थेऽयं पूर्वपक्षः—ह्रदो वह्निमानित्यादौ मेयत्वविशिष्टवह्न्यभाववद्ध्रदेऽतिव्याप्तिः, निरुक्तत्रित्वावच्छिन्नाभावस्य ह्रदत्वव्यापकत्वविशिष्टविशेषणतासम्बन्धेन वह्न्यभावविशिष्टह्रदत्वावच्छेदेन मेयत्वप्रकारकनिश्चयावृत्तिविषयिता-प्रतियोगिकत्वात्। एवं वह्न्यभाववद्ध्रदविशिष्टमेयत्वेऽतिव्याप्तिः, निरुक्त-त्रित्वावच्छिन्नाभावस्य वह्न्यभाववद्ध्रदप्रकारकनिश्चयावृत्तिविषयिताप्रतियोगिकत्वादिति चेदत्र केचित् निरुक्तत्रित्वावच्छिन्नाभावो यद्धर्मावच्छिन्नविषयकनिश्चयवृत्तित्वे सति यादृशधर्मावच्छिन्नविषयकनिश्चयवृत्तित्वे सति यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयावृत्तियादृशविषयिताप्रतियोगिकः, तद्धर्मावच्छेदेन तादृशधर्मवत्त्वं हेत्वाभासत्वमित्यर्थकरणादुक्तस्थले निरुक्ताभावप्रतियोगितायाः वह्न्यभाववद्ध्रदविषयकनिश्चयवृत्तित्वविरहेण नातिव्याप्तिरिति ध्येयम्।

इति। प्रमेयत्वविशिष्टसाधनत्वावच्छेदेन साध्यव्यभिचारनिश्चयस्यापि-साधनत्व-सामानाधिकरण्येन तथाविधव्याप्त्यवगाहित्वसत्त्वात् निरुक्तत्रित्वावच्छिन्ना-भावस्य तादृशनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वविरहादेव प्रमेयत्व-

## तात्पर्यदीपिका

अवच्छेदकावच्छेदेन साध्यतास्थले यद्धर्मविशिष्टे यादृशधर्मवत्तानिश्चयोत्तरानुमिति-सामान्ये यद्धर्मावच्छेदेन यादृशधर्मवत्तानिश्चयावृत्तिविषयिता-प्रतियोगिताकनिरुक्तत्रित्वा-वच्छिन्नाभावः तद्धर्मविशिष्टे तादृशधर्मवत्त्वं दोष इति पर्य्यवसितार्थः। अतो यत्र पर्वतत्वसामानाधिकरण्येन नीलत्वस्य पक्षतावच्छेदकत्वं नीलपर्वतत्वावच्छेदेन वह्नेः साध्यत्वं तत्र सामानाधिकरण्येन नीलत्वाभाववत्पर्वते नातिव्याप्तिः। अथ वह्न्यभाववद्ध्रदत्वा-वच्छिन्नविषयिताया जातिमान् वह्न्यभाववानित्यादिनिश्चयसाधारणतया तत्र च प्रकृतानुमिति प्रतिबन्धकताया विरहेण बाधप्रभृतौ सर्वत्रासम्भव इति चेन्न, यादृशसमुदायत्ववृत्ति-

## जागदीशी

विशिष्टव्यभिचारादौ नातिप्रसङ्गः। प्रमेयत्वविशिष्टसव्यभिचारत्वावच्छेदेन साधनवृत्तितानिश्चयस्यापि विरोधिनी न साधनधर्मिकसाध्यव्यभिचारित्वा-वगाहिता, नव्यानां मते समानधर्मिकस्यैव ज्ञानस्य विरोधित्वात्। अतः साधन-निष्ठप्रमेयत्वविशिष्टसव्यभिचारे नातिप्रसङ्गः। धूमहेतुना द्रव्यत्वसामानाधि-करण्येन वह्नेः साध्यतास्थले तु द्रव्यत्वावच्छिन्नं सर्वं द्रव्यं न वह्न्यभाववत् किन्तु यत्किञ्चिद् द्रव्यमेवेति न तत्र वह्न्यभावविशिष्टे द्रव्येऽतिप्रसङ्गः।

## तात्पर्यदीपिका

निरूपकताकविषयित्वं प्रकृतानुमितिप्रतिबन्धकताऽनतिरिक्तवृत्ति तादृशसमुदायत्वविशिष्ट-रूपवत्त्वस्य विवक्षणात्। वह्न्यभाववद्ध्रदत्वगतसमुदायत्ववृत्तिनिरूपकताकविषयिता च न जातिमान् वह्न्यभाववानिति निश्चयसाधारणीति तज्ज्ञानव्यावृत्तिरिति। निरुक्तासम्भव-वारणायाव्यापकीभूतविषयिताशून्यत्वनिवेशकृतां गदाधरभट्टाचार्य्याणामयमाशयः, यत्रासद्धेतु-विशेषे घटविषयकं ज्ञानं नियमतो दोषविषयकं जायते, दोषाविषयकञ्च पटकालीनघट-विषयकमेव जायते, तत्रत्य-दोषप्रतिबन्धकतानतिरिक्तवृत्तित्वस्य घटत्वगतैकत्ववृत्तिनिरूपकताक-विषयितायां सत्त्वेन तादृशाङ्कुरविशेषे घटस्य देषत्वापत्तिरव्यापकीभूतविषयिताशून्यत्वं-

विना न वारयितुं शक्यत इति। जगदीशेन तादृशमङ्कुरं नोरीक्रियत इति न कश्चिद्दोष इति न तन्निवेशावश्यकता इति ध्येयम्।

## तात्पर्यदीपिका

यदि च नव्यानामित्यस्यानुगमः। यद्रूपावच्छिन्नविशेष्यतानिरूपित-यत्सम्बन्धावच्छिन्न-यद्रूपावच्छिन्नप्रकारताविशिष्टविषयतात्वावच्छिन्नप्रतियोगिताको निरुक्तत्वावच्छिन्नाभाव-स्तद्रूपावच्छिन्ने तत्सम्बन्धेन तद्रूपावच्छिन्नत्वं हेतुदोष इति। प्रकारतावैशिष्ट्यञ्च स्वनिरूपितविशेष्यतावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविशेष्यतानिरूपितत्व - स्वनिरूपक-निश्चयावृत्तित्व-स्वाश्रयत्वैतत्त्रितयसम्बन्धेन। स्वाश्रयत्वञ्च स्वावच्छिन्नविशेष्यतानिरूपितप्रति-योगित्वसम्बन्धावच्छिन्नप्रकारतावत्त्व-स्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकीभूतविधेयता-वत्त्व-स्वावच्छेदकधर्मसमनियतानुयोगितानिरूपितप्रतियोगितावत्त्व - स्वनिरूपिताभावविषयता - निरूपितप्रकारतावत्त्वैतदन्यतरसम्बन्धेन। प्राथमिकप्रकारतावत्त्वञ्च स्वावच्छेदकधर्मा-वच्छिन्नत्व-स्वनिरूपितसांसर्गिकावच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतानिरूपितावच्छेद-कतावत्संसर्गावच्छिन्नत्वोभयसम्बन्धेन। विधेयतावत्त्वञ्च स्वावच्छेदकधर्मसमनियतानुयोगिता-निरूपितप्रतियोगितावत्त्व-स्वाभिन्नविशेष्यतानिरूपितप्रतियोगित्वसम्बन्धावच्छिन्नप्रकारतावत्त्वै - तदन्यतरसम्बन्धेन। प्रतियोगितावत्त्वद्वयं स्वावच्छेदकधर्मावच्छिन्नत्व-स्वावच्छेदकसम्बन्धा-वच्छिन्नत्वोभयसम्बन्धेन। प्रकारतावत्त्वञ्च स्वावच्छेदकधर्मावच्छिन्नत्व-स्वनिरूपितसांसर्गिका-वच्छेदकतानिरूपितावच्छिन्नत्वनिष्ठावच्छेदकतावच्छेदकतावत्संसर्गावच्छिन्नत्वैतदुभयसम्बन्धेन। प्रथमसंसर्गनिवेशात् व्यभिचारविशिष्टमेयत्वादौ ह्रदत्वावच्छेदेन वह्नेः साध्यतास्थले मेयत्व-विशिष्टवह्न्यभाववद्ध्रदे चं नातिव्याप्तिः। स्वनिरूपकनिश्चयावृत्तित्वनिवेशात् ह्रदत्वसामाना-धिकरण्येन वह्न्यभाववद्ध्रदादौ पर्वतत्वावच्छेदेन महानसीयवह्नेः साध्यतास्थले महानसीयत्वा-भाववद्वह्निरित्यादौ च नातिव्याप्तिः। स्वाश्रयत्वनिवेशाद् वह्न्यभावव्याप्त्यसाध्यकस्थले वह्नि-मत्पर्वते नातिप्रसङ्गः। स्वाश्रयाश्रयत्वघटकप्रथमसंसर्गनिवेशाद् ह्रदपक्षकवह्न्यादिसाध्यकस्थले वह्न्यभाववद्ध्रदादेः संग्रहः। द्वितीयसंसर्गनिवेशाद् वह्निसाध्यकह्रदपक्षकस्थले वह्न्यभावव्याप्य-वद्ह्रदरूपसत्प्रतिपक्षस्य वह्न्यभावसाध्यकस्थले वह्निव्याप्यवत्पर्वतरूपसत्प्रतिपक्षस्य च संग्रहः। तृतीयसंसर्गनिवेशाद् वह्न्यभावसाध्यक-पर्वतपक्षकस्थले वह्निमत्पर्वतादेः संग्रहो बोध्यः। एकदेशव्यापकतास्वीकरणमेव यदि च नव्यानामित्यस्योत्थितिबीजं तदा यादृश-विशिष्टविषयकनिश्चयोत्तरानुमितिसामान्ये इत्यादिपूर्वकल्पस्य तु यादृशविशिष्टविषयक-निश्चयोत्तरानुमितित्वव्यापकनिरुक्तोभयव्यतिरेकपर्यवसितार्थकत्वात् तत्र ह्रदो वह्निमान्

धूमादित्वत्र वह्न्यभाववविशिष्टह्रदविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वं निरुक्तोभयाभावस्य एकदेशे प्रकृतपक्षधर्मिकप्रकृतसाध्यावगाहित्वाभावे स्वीकृतमेव। धूमवान् वह्नेरित्यादि-व्यभिचारिणि च धूमाभाववद्वृत्तिवह्निरितिव्यभिचारविशिष्टविषयकनिश्चयोत्तरानुमितित्वव्यापकत्वं निरुक्तोभयाभावस्यैकदेशे प्रकृतपक्षधर्मिकप्रकृतसाध्यव्याप्तिविशिष्टहेतुमत्त्वावगाहित्वाभावे स्वीकृतमेव। इदन्तु तदनङ्गीकृत्यैव परिष्करोति यदि चेत्यादिना। नव्यास्तु साध्या-भाववदवृत्तित्वमेव व्याप्तिमनुमितावुपयोजयन्ति। प्रकृतहेत्वाभासलक्षणे च तादृशान्वयव्याप्ति-विशिष्टहेतुमत्त्वावगाहित्वादिघटितोभयाभावमात्रस्य प्रवेशे वह्न्यभावव्यापकीभूताभावप्रति-योगित्वाभाववज्जलमितिज्ञानदशायां ह्रदो वह्निमान् जलादित्यत्रानुपसंहारिणि अव्याप्तिः स्यात्।

## जागदीशी

न चैवं द्रव्यत्वावच्छेदेन धूमहेतुना वह्नेः साध्यतास्थले भागासिद्धयंशतो बाधयोरव्याप्तिः, द्रव्यत्वावच्छिन्ने सर्वत्र धूमस्य वह्नेर्वा सामान्याभावस्या-सत्त्वादिति वाच्यम्, निरुक्तत्रित्वावच्छिन्नाभावो यद्धर्मावच्छेदेन यादृश-धर्मवत्तानिश्चयत्वविरोधिविषयिताप्रतियोगिकः तद्धर्मावलीढस्यैव तादृश-धर्मवतः प्रकृतपक्षतावच्छेदकधर्मावच्छेदेन प्रकृतसाध्यहेतुकदोषनिरुक्तौ निवेश्य-त्वात्। न च वह्नित्वावच्छेदेन निर्धूमवृत्तित्वासत्त्वाद् द्रव्यं धूम-वद् वह्नेरित्यादौ साध्याभाववद्वृत्तित्वविशिष्टहेतुस्वरूपव्यभिचारेऽव्याप्तिः; साध्याभाववन्निष्ठाधिकरणतानवच्छेदकीभूत-हेतुतावच्छेदकधर्मवत्त्वस्यैव व्याप्ति-तया तद्विरोधिनो हेतुतावच्छेदकधर्मावच्छेदेन तादृशाधिकरणतावच्छेदक-

## तात्पर्यदीपिका

वह्न्यभावव्यापकीभूताभावप्रतियोगित्वाभावविशिष्टजलविषयकनिश्चयोत्तरं ह्रदो वह्निमान् वह्न्य-भाववद्वृत्तिजलवांश्चेतिसमूहालम्बनानुमितौ निरुक्तोभयाभावासत्त्वात्, अतस्त्रित्वावच्छिन्ना-भावो निवेशितः। अत्र चैकदेशव्यापकत्वमनङ्गीकृत्य यदि चेत्यादिना यल्लक्षणं कृतं तत्राप्यनुपसंहारिसंग्रहाय त्रित्वावच्छिन्नाभावो निविष्टः।

अत्र वदन्ति-कल्पानुगमः—यद्धर्मावच्छिन्नविषयताशालिनिश्चयाव्यवहितोत्तरानुमितित्व-व्यापकतादृशोभयाभावप्रतियोगिभूतविषयिताविशिष्टं यद्रूपं तद्रूपावच्छिन्नो दोषः। विषयिता-वैशिष्ट्यञ्च स्ववृत्तिभेदप्रतियोगितावच्छेदकविषयितानिरूपितावच्छेदकत्व-स्ववृत्तिभेदप्रतियोगिता-

वत्त्वस्यैव व्यभिचारत्वात्। अन्यथा द्रव्यं विशिष्टसत्त्वादित्यादेरपि व्यभिचारित्वापत्तेरिति परैरपरिशीलितः पन्थाः।

गुरुचरणास्तु यद्विषयकेत्यादेर्यादृशविशिष्टविषयकनिश्चयवृत्तित्वविशिष्टाया विरोधिविषयितायाः प्रयुक्तो व्यापकः प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वावगाहित्वस्य च द्वयोर्व्यातिरेकस्तत्त्वं हेतुदोषत्वमित्यर्थः। तत्र च विरोधिविषयिताया व्याप्यत्वं न स्वरूपसम्बन्धेन बाधादेराहार्य्यनिश्चये निरुक्तावगाहिताद्वयसत्त्वेनासम्भवापत्तेः, किन्तु स्वाश्रयोत्तरानुमितित्वसम्बन्धेन स्वाश्रयोत्तरानाहार्य्यमानसज्ञानत्वसम्बन्धेन वा तथात्वम्, एतल्लाभार्थमेव तदुत्तरमनुमितावनाहार्य्यमानसज्ञाने वेत्युक्तम्। न च विषयिताया विरोधित्वं यदि प्रतिबन्धकतावच्छेदकत्वं तदा निर्वह्नि-

## तात्पर्यदीपिका

वच्छेदकविषयिताविशिष्टविषयिताव्यापकतावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक-भेदवत्त्वोभयसम्बन्धेन। विषयितायाः स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वञ्च स्वनिरूपकतावच्छेदकावच्छिन्नविषयिताकानाहार्यनिश्चयवृत्तित्वसम्बन्धावच्छिन्नं बोध्यम्। चरमसम्बन्धघटकविषयितानिष्ठवैशिष्ट्यञ्च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्व-स्वनिरूपकतावच्छेदकावच्छिन्नविषयिताशून्यज्ञानवृत्तित्वसम्बन्धावच्छिन्न-स्वनिष्ठावच्छेदकताप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन। स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वञ्च स्वनिरूपकतावच्छेदकावच्छिन्नविषयित्वसम्बन्धावच्छिन्नं बोध्यम्।

वस्तुतो यद्विषयकेत्यादिजगदीशग्रन्थे तादृशविषयिताप्रतियोगित्वविशेषणं व्यर्थं, लक्षणघटकयादृशविशिष्टविषयितायां विशिष्टान्तरविषयकनिश्चयावृत्तित्वनिवेशेनैव लाघवादिति

## जागदीशी

वह्निमानित्यादौ घटाद्यभावविशिष्टभूतलादेरपि दोषत्वापत्तिः, तन्निश्चयनिष्ठविषयिताया अपि भूतलं घटवदित्यादिधीप्रतिबन्धकतावच्छेदकत्वात्। एवं पर्वतान्यः पर्वतो दहनान्यदहनवानित्यादौ पर्वतान्यत्वाद्यभावविशिष्टपर्वतादिरूपाश्रयासिद्धावव्याप्तिः, तद्विषयितायाः कुत्रापि बुद्धौ प्रतिबन्धकतानवच्छेदकत्वात्, पर्वतः पर्वतान्य इत्याकारकबुद्धेराहार्यत्वेनाप्रतिबध्यत्वादिति

वाच्यम्, निरुक्तोभयाभावप्रतियोगिन्यवगाहिता यदंशे यन्निरूपिता तदंशे तदभावनिरूपितविषयिताया एव प्रकृते विरोधिविषयितापदेनोक्तत्वात्। तद्भावविशिष्टभूतलादिविषयितायाश्चातथात्वेन निर्वह्निर्वह्निमानित्यादौ निर्घट-घटाभावविशिष्टभूतलादावतिव्याप्त्यभावादिति प्राहुः। तच्चिन्त्यम्, साध्याभाव-व्याप्यविशिष्टपक्षात्मकसत्प्रतिपक्षाव्याप्तिप्रसङ्गात्। एवं काञ्चनमयपर्वतः काञ्चनमयवह्निमानित्यादौ काञ्चनमयत्वाद्यभावविशिष्टपर्वतादिरूपाश्रयासिद्धौ लक्षणसङ्गमनेऽपि काञ्चनमयत्वाद्यभावव्याप्यविशिष्टपर्वतादिरूपाश्रयासिद्धा-वव्याप्तिप्रसङ्गश्च। यत्र यो यादृशहेत्वाभासस्तत्र तद्व्याप्यमपि तादृश-हेत्वाभास इत्यादिना दीधितिकृता तस्याप्यग्रे लक्ष्यतायाः स्वीकर्तव्यत्वात्। किञ्चैवं यद्विषयकज्ञानाहार्यनिश्चयनिष्ठविरोधिविषयितायाः - स्वरूपसम्बन्धेन

### तात्पर्यदीपिका

चेन्न, वह्न्यभाववत्पर्वतकालीनपर्वतीयवह्न्यभाववान् पर्वतो वह्न्यभावव्याप्यवानित्यादौ पर्वतीयवह्निमत्पर्वतरूपाश्रयासिद्ध्यादावव्याप्तिस्तस्य वह्निमत्पर्वतरूपविशिष्टान्तराघटित-त्वादतस्तन्निवेशः। अत्र निश्चयश्च तत्तदाहार्यभिन्नत्वेन निवेशनीय इत्यादि—ग्रन्थे

### जागदीशी

निरुक्तोभयाभावव्याप्यत्वं तत्त्वं हेतुदोषत्वमित्यस्यैव सम्यक्त्वे स्वाश्रयोत्तरानु-मितित्वादिसम्बन्धेन विरोधिविषयिताया व्याप्यत्वाभिधानमपि सन्दर्भविरुद्धं स्यात्। एतेन निरुक्तोभयाभावप्रतियोगिन्यवगाहिता यदंशे यन्निरूपिता तदंशे तदभावेन तदभावव्याप्येन वा निरूपितैव विषयिता प्रकृते विरोधि-विषयिता वक्तव्या, अतो न सत्प्रतिपक्षाद्यव्याप्तिरित्युक्तावपि न निस्तारः, पक्षनिष्ठसाध्याभावादेस्तावतापि संग्रहायोगाच्चेति दिक्।

यत्तु प्रयुक्तत्वं व्यापकत्वं, यद्विषयकनिश्चयनिष्ठविरोधिविषयिताया उभया-भावव्याप्यत्वं च स्वाश्रयनिश्चयाव्यवहितोत्तरानुमितित्वसम्बन्धेन ; तादृश-सम्बन्धलाभायैव तदुत्तरानुमितावित्युक्तम्। एवं च विरोधिविषयक-यद्विषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकस्तादृशोभयाभाव इति यावत्। एवं च निर्वह्निर्वह्निमानित्यादौ दोषादिविषयितायां स्वरूपसम्बन्ध-रूपोभयाभाव-प्रयोजकत्वासम्भवेऽपि तादृशविषयितायां निरुक्तविरोधित्वस्यैव निवेशनीय-

तया तत्र लक्षणं सुसमन्वयमेव, तादृशप्रयोजकत्वस्यानिवेशात्। न चैवं तत्र वस्तुमात्रेऽतिव्याप्तिर्दुर्वारैव, तादृशोभयाभावस्य विरोधिविषयकसमूहालम्बनघटादिविषयकनिश्चयाव्यवहितोत्तरानुमितित्वव्यापकतया अक्षतत्वादिति वाच्यम्, विरोधिविषयितानतिरिक्तवृत्तिर्यद्विषयिता तच्छालिनिश्चयस्य

तात्पर्यदीपिका

निश्चयघटकयादृशविशिष्टविषयिताया।गिच्छाविशिष्टान्यत्वनिवेशे तात्पर्य्यम्। वैशिष्ट्यञ्च स्वप्रयोज्यत्व-स्वाव्यवहितोत्तरज्ञानीयत्वोभयसम्बन्धेन। तथा च निर्वह्निपर्वते वह्निज्ञानं जायतामितीच्छा-प्रयोज्यत्वस्य निर्वह्निर्वह्निमान् वह्निव्याप्यधूमवान् गृहञ्च घटवदित्यादिज्ञानीय-

जागदीशी

निश्चयान्तेन विवक्षितत्वात्। घटादिविषयितायास्तत्र निरुक्तविरोधिविषयितानतिरिक्तवृत्तित्वविरहात्। न चैवं विरोधिविषयितानतिरिक्तवृत्तिर्यदीयविषयिता तावतैव सामञ्जस्ये शेषवैयर्थ्यमिति वाच्यं, यत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यादेः साध्यता तत्र पर्वतत्वादि सामानाधिकरण्येन वह्न्यभावादिमत्त्वस्य विषयिताया निरुक्तविरोधिविषयिताऽनतिरिक्तवृत्तितया तत्रातिव्याप्तिवारकतया शेषसार्थक्यात् तदुपादाने तादृशवह्न्यभावादिमत्त्वविषयक निश्चयानन्तरं पर्वतत्वादिसामानाधिकरण्येन वह्न्यनुमित्युत्पत्त्या तादृशानुमितौ तथाविधोभयसत्त्वेनातिव्याप्त्यनवकाशादिति। तत्तुच्छं, निर्वह्निः पर्वतो वह्निमानित्यादौ यत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यभावादेः पक्षतावच्छेदकता तत्र पर्वतत्वादिसामानाधिकरण्येन वह्न्यादिमत्त्वस्य विशिष्टपक्षग्रहाविरोधित्वेनाश्रयासिद्ध्यनात्मकस्य निरुक्तविरोधि-विषयितानतिरिक्त वृत्तिविषयिताकतया तत्रातिव्याप्तेः। तादृशोभयाभावप्रतियोगितावच्छेदकगर्भे यद्रूपविशिष्टे येन सम्बन्धेन यद्रूपावच्छिन्नवैशिष्ट्यावगाहित्वं निविशते, तद्रूपावच्छिन्नविशेष्यक - तत्संसर्गकतद्रूपावच्छिन्नप्रकारकानुमितित्वावच्छिन्न - निरूपित-प्रतिबन्धकतावच्छेदकत्वरूपविरोधित्वस्य विषयितायां निवेशे शेषवैयर्थ्यम्। उक्तरीत्या निर्वह्निर्वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिश्च।

तात्पर्यदीपिका

घटविषयितायामसत्त्वेन इच्छाविशिष्टान्यत्वस्य सत्त्वात् तत्रातिव्याप्तिवारणाय विरोधिविष-

## जागदीशी

यद्विषयकनिश्चयस्य विरोधिनी प्रतिबध्यतावच्छेदिका या विषयिता तत्प्रयुक्तस्तद्घटितप्रतियोगिक इत्यर्थस्तु न युक्तः, पर्वतः पर्वतान्यो-धूमादित्यादौ पर्वतान्यत्वाभावविशिष्टपर्वताद्यात्मकबाधप्रभृतावव्याप्ति-प्रसङ्गात्। पर्वतान्यत्वाभावविशिष्ट-पर्वतनिश्चयस्य प्रतिबध्यतावच्छेदकविषयित्वाप्रसिद्धेः, तदुत्तरमनुमितावित्यादिदलस्य व्यर्थतापत्तेश्च। यद्विषयकनिश्चयप्रतिबध्यतावच्छेदकविषयिताघटितप्रतियोगिकः पक्षधर्मिकसाध्यावगाहित्व - साध्यव्याप्यहेतुमत्त्वाऽवगाहित्वोभयव्यतिरेकस्तत्त्वमित्यस्यैव सम्यक्त्वात्।

एतेन यद्विषयकनिश्चयनिष्ठया यद्विरोधिविषयितया प्रयुक्तस्तदुत्तरमनुमितौ निरुक्तावगाहितादूयव्यतिरेकस्तत्त्वमेवार्थः। प्रयुक्तत्वञ्च काष्ठादौ दाहाद्यभावो मणित्वाद्यवच्छिन्नप्रयुक्त इत्यादिप्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः। स च क्वचिदेव किञ्चिन्निरूपित इति नातिप्रसङ्गशङ्कापीति कस्यचित् प्रलपितमप्यपास्तं, तादृशस्वरूपसम्बन्धे मानाभावात्, मणिप्रयुक्तो दाहाभाव इत्यादौ त्व मण्यभावजन्यदाहप्रतियोगिकत्वरूपस्यैव मणिप्रयुक्तत्वस्य दाहाद्यभावेऽवगाहनात्। अस्तु वा स्वरूपसम्बन्धविशेषः प्रयुक्तत्वम्; अन्यथा इन्धन इव जलेऽपि मणिप्रयुक्तो दाहाभाव इत्यादिप्रतीत्यापत्तेः। तथापि निश्चयपदस्य

## तात्पर्यदीपिका

यिता-प्रतियोगिक इति। वह्निमान् पर्वतः वह्न्यभाववांश्च पर्वत इति समूहालम्बनज्ञानं जायतामितीच्छाविशिष्टतयाऽनाहार्य्य-(नियताहार्य्यभिन्न) ज्ञानीयविषयितावारणमिति।

विशेष्यताविशिष्टप्रकारताशून्यत्वं प्रमात्वम् — वैशिष्ट्यञ्च स्वनिरूपितत्व - स्वाश्रयनिष्ठाधिकरणतानिरूपकताविशिष्टान्यत्वैतदुभयसम्बन्धेन। निरूपकतावैशिष्ट्यञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व - स्वसामानाधिकरण्य - स्वानवच्छेदकानवच्छिन्नत्व-स्वानवच्छेदकान-

## जागदीशी

विरोधिपदस्य तदुत्तरमुमितावित्यादिभागस्य च वैयर्थ्यं दुर्वारमेव। यद्विषयकनिश्चयनिष्ठविषयिताप्रयुक्तः पक्षधर्मिकसाध्यावगाहित्व-साध्यव्याप्यहेतुमत्तावगाहित्वयोर्व्यतिरेकस्तत्त्वं हेत्वाभासत्वमित्यस्यैव सम्यक्त्वादित्यास्तां विस्तरः।

ननु यादृशदोषव्यक्तीनां निश्चयस्योत्तरक्षणे सामग्रीविरहेण कस्यापि वस्तुनोऽनुमितिर्नोत्पन्ना तादृशव्यक्तिष्वनुमितिगर्भलक्षणस्याव्याप्तिरत आह अनाहार्य्यमानसज्ञाने वेति। तदुत्तरमित्यनुषज्यते। तथा च यादृश-विशिष्टविषयकनिश्चयोत्तरानाहार्य्यमानसज्ञानत्वावच्छेदेन तादृशप्रयुक्तत्व-विशिष्ट-निरुक्तावगाहितादृद्वयव्यतिरेकस्तादृशविशिष्टो हेतुदोष इत्यर्थः। दोष-मात्रस्यैव निश्चयोत्तरमन्ततस्तन्निश्चयस्यैव मानसज्ञानसम्भवात् अत्र कल्पे न कुत्राप्यव्याप्तिसम्भावनेति भावः। अत्रापि बाधनिश्चयोत्तरमुत्पन्नस्य मानसज्ञानस्य निरुक्तावगाहितादृद्वयसत्त्वादसम्भवस्य वारणार्थमनाहार्य्यपदं। मानसपदं त्वव्याप्तिवारणार्थमेव, अन्यथा बाधनिश्चयोत्तरमुत्पन्नदोषविशेषा-दिजन्यानाहार्य्यज्ञाने निरुक्तावगाहितादृद्वयस्य सत्त्वेन क्वचिद्बाधप्रभृतावव्याप्ति-प्रसङ्गात्।

तात्पर्यदीपिका

वच्छिन्नत्वसम्बन्धावच्छिन्नाधेयत्वैतच्चतुष्टयसम्बन्धेन। ह्रदो वह्निमानितिज्ञानस्य प्रकारतायां ह्रदनिष्ठाधिकरणतानिरूपित - कालिकसम्बन्धावच्छिन्ननिरूपकताविशिष्टत्वात् प्रमात्वा-पत्तिवारणाय स्वावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशः। रङ्गे रजतत्वावगाहिन इदं रजतमिति ज्ञानस्य रजतत्वनिष्ठनिरवच्छिन्नप्रकारतायां रङ्गनिष्ठाधिकरणतानिरूपित-रङ्गत्वनिष्ठनिरवच्छिन्ननिरूपकताविशिष्टत्वसत्त्वेन प्रमात्वापत्तिवारणाय स्वसामानाधि-

## जागदीशी

न चाहं गौरो ज्ञानित्वादित्यादिस्थलीयबाधे तथाप्यव्याप्तिः, सत्यपि नाहं गौर इत्यादिबाधनिश्चये तदुत्तरं दोषवशादहं गौर इति पक्षधर्मिक-साध्यवत्त्वावगाहिमानसज्ञानोत्पादादिति वाच्यं, मानसपदस्य दोषविशेषाद्य-जन्यपरत्वादिति ध्येयम्।

ननु काञ्चनमयः पर्वतः तादृशवह्निमांस्तथाविधधूमादित्यादौ पक्षता-वच्छेदकविशिष्टपक्षादेरप्रसिद्धत्वादाश्रयासिद्ध्यादावव्याप्तिरत आह—पक्षता-वच्छेदकवैशिष्ट्यादिकं चेति। वैज्ञानिकं विज्ञानीयविषयतारूपं, न तु वास्तवं समवायादिसम्बन्धरूपमित्यर्थः।

तात्पर्यदीपिका

करण्यनिवेशः। विशिष्टसत्तावान् गुण इति ज्ञानस्य विशिष्टसत्तात्वावच्छिन्नप्रकार-

तायां गुणनिष्ठाधिकरणतानिरूपितसत्तात्वावच्छिन्ननिरूपकताविशिष्टत्वसत्त्वात् प्रमात्वापत्ति-वारणाय स्वानवच्छेदकानवच्छिन्नत्वनिवेशः। घटत्वेन घटत्वावगाहिज्ञाने विषयितया स्वरूपतो घटत्वप्रकारकज्ञानस्य निरवच्छिन्नघटत्वप्रकारतायामपि विशेष्यीभूतज्ञाननिष्ठाधिकरणता-निरूपितविषयित्वसम्बन्धावच्छिन्न-घटत्वत्वावच्छिन्न-निरूपकताविशिष्टत्वसत्त्वेन प्रमात्वापत्ति-वारणाय निरुक्ताधेयत्वनिवेशः। तथाचोक्तस्थले प्रकारतायां स्वानवच्छेदकानवच्छिन्नत्व-सत्त्वेऽपि स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन निरूपकतावृत्तित्वविरहान्नापत्तिरिति भावः।

प्रमेयत्वविशिष्टसव्यभिचार इति जगदीशग्रन्थे विशिष्टप्रकारकनिश्चयस्थले इदं ज्ञानं विशिष्टाभाववति विशिष्टप्रकारकम्—इदं ज्ञानं सामान्याभाववति सामान्यप्रकारकमिति

## जागदीशी

**गुणीयसंयोगेन पर्वते वह्नेः साध्यत्वे तु तत्सम्बन्धावच्छिन्नवह्न्यभावादिकं न हेत्वाभासस्तस्याप्रसिद्धत्वात्, किन्तु संयोगे गुणीयत्वाभावः, स च हेतु-मन्निष्ठाभावीयगुणीयसंयोगावच्छिन्नप्रतियोगितानवच्छेदकवह्नित्वमित्येव व्याप-कताज्ञानं प्रति विरोधित्वाद्धेत्वाभासलक्षणाक्रान्त इति।**

**अन्वयव्याप्तिमात्रस्य निवेशे व्यतिरेकव्याप्तिग्रहप्रतिबन्धके अनुपसंहारिण्य-व्याप्तिरत आह व्याप्तिश्चेति। इत्थं च प्रकृतपक्षे प्रकृतसाध्यावगाहित्वस्य साध्यान्वयव्याप्तिविशिष्टहेतुमत्तावगाहित्वस्य साध्यव्यतिरेकव्याप्तिविशिष्ट-प्रकृतहेतुमत्तावगाहित्वस्य च त्रित्वावच्छिन्नाभाव एव लक्षणघटक इति भावः।**

**ननु निर्वह्निर्वह्निमान् धूमादित्यादौ बाधाद्यव्याप्तिः, निर्वह्निधर्मिकवह्नि-**

## तात्पर्यदीपिका

द्विविधाप्रामाण्यज्ञानस्योत्तेजकत्वम्। तदनुरोधेन च विशिष्टप्रकारकनिश्चयत्वावच्छिन्नैका प्रतिबन्धकता, सामान्यप्रकारकनिश्चयत्वावच्छिन्नाचापरा प्रतिबन्धकता कल्पनीया। अन्यथा अनुगतरूपेण द्विविधाप्रामाण्यज्ञानस्योत्तेजकत्वं स्वीकृत्य एकप्रतिबन्धकताकल्पने सामान्य-प्रकारकनिश्चयदशायां विशिष्टप्रकारकत्वघटिताप्रामाण्यग्रहसत्त्वे प्रतिबन्धकत्वानुपपत्तिरित्यस्मद्-गुरुचरणाः। **पक्षतावच्छेदकवैशिष्ट्यादिकमित्यत्रादिपदात्** साध्यतावच्छेदकवैशिष्ट्या-देर्ग्रहणम्। **वैज्ञानिकमिति** विज्ञानीयविषयतारूपं तत्तत्प्रकारेण ज्ञायमानत्वरूपमित्यर्थः। तथा च पर्वतादेः काञ्चनमयत्वादिवैशिष्ट्यस्य वास्तविकस्य विरहेऽपि तेन रूपेण ज्ञान-विषयतामादाय लक्षणसमन्वय इति भावः।

## दीधितिः

ताद्दशावगाहित्वप्रसिद्धिराहार्य्यज्ञान एवाभ्युपेतव्याऽनन्यगतिकत्वात्। एवञ्च वस्तुमात्रनिश्चयादनन्तरं निर्वह्नित्वादिविशिष्टे वह्नेरग्रहेऽपि न क्षतिस्तस्य विरोध्यविषयकत्वात्।

## जागदीशी

मत्तादिज्ञानस्यालीकतया पक्षधर्मिकसाध्यावगाहित्वाप्रसिद्धिरत आह ताद्दशावगाहितेति। यद्विषयकनिश्चयस्य विरोधिविषयिताप्रयुक्त इत्यस्य फलमाह एवञ्चेति। वस्तुमात्रनिश्चयेति—घटविशिष्टगृहात्मकवस्तुनिश्चयेत्यर्थः। अनन्तरमित्यत्र अननुमिताविति शेषः। निर्वह्नित्वादिविशिष्ट इति—निर्वह्नित्वविशिष्टधर्मिकवह्न्यवगाहित्वविरहेऽपीत्यर्थः। न क्षतिः—न घटादिविशिष्टगृहादावतिव्याप्तिः। तस्येति—निर्वह्निधर्मिकवह्न्यवगाहित्वस्य विरोध्यविषयकत्वात्—घटविशिष्टगृहाद्यात्मकं यद्वस्तुमात्रं तन्निश्चयत्वविरोधिविषयितान्यत्वादित्यर्थः, पटानधिकरणमित्यादौ पदमध्यस्थनञापि समुदितार्थस्य प्रतियोगितयाऽन्वयस्य व्युत्पन्नत्वात्। तथा च तत्रत्यस्य निरुक्तावगाहिताद्वयव्यतिरेकस्य घटविशिष्टगृहादिनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वमेव नास्तीति नातिव्याप्तिरिति भावः।

## तात्पर्यदीपिका

आहार्य्यज्ञाने इति—निर्वह्नित्वविशिष्टपर्वते वह्निप्रत्यक्षं जायतामित्याकारकेच्छाजन्यप्रत्यक्ष इत्यर्थः। एवञ्चेति—विरोधिविषयिताप्रयुक्तत्वनिवेशे चेत्यर्थः।

## दीधितिः

एवं साध्यनिश्चयोत्तरं तस्याननुमितावपि मानसज्ञानाविरोधित्वाच्च। ताद्दशपक्षे ताद्दशसाध्यवैशिष्ट्यस्य ताद्दशसाध्यनिरूपित-

## जागदीशी

याद्दशविशिष्टविषयकत्वं प्रकृतपक्षहेतुसाध्यकानुमितिप्रतिबन्धकतानतिरिक्त-

वृत्ति तत्त्वं हेतुदोषत्वमिति प्रागुक्तलक्षणस्य त्यागे अनुशयान्तरमप्याह एवमिति—उक्तरीत्या विरोधिविषयताप्रयुक्तत्वस्य निवेशन इत्यर्थः। साध्यनिश्चयेत्यस्य पक्ष इत्यादिः; तस्य साध्यस्याऽननुमितावपीति क्षतिरिति पूर्वेणान्वयः। पक्षधर्मिकसाध्यावगाहित्वस्य साध्यव्याप्यहेतुमत्तावगाहित्वस्य वा साध्यविशिष्टपक्षनिश्चयत्वाभावव्याप्यत्वविरहेण तादृशावगाहिताद्वयव्यतिरेकस्य साध्यविशिष्टपक्षनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वविरहादेव प्रकृतलक्षणस्य साध्यविशिष्टपक्षे नातिव्याप्तिः। प्रागुक्तलक्षणस्य तु पक्षधर्मिकसाध्यविधेयकानुमितित्वावच्छिन्नं प्रति प्रतिबन्धकत्वमादायैव तत्रातिव्याप्तिरावश्यकीति भावः। यद्यप्यनुमित्साकालीनसाध्यनिश्चयोत्तरानुमितौ निरुक्तावगाहिताद्वयस्य सत्त्वात् यादृशविशिष्टविषयकनिश्चयोत्तरानुमितित्वावच्छेदेन निरुक्तावगाहिताद्वयव्यतिरेक इत्येतावतैव साध्यविशिष्टपक्षस्य वारणं सम्भवति, तथापि तत्साध्यवत्तया यत्पक्षनिश्चयोत्तरं कदापि तत्साध्यवत्तया तत्पक्षस्य नानुमितिस्तत्साध्यविशिष्टतत्पक्षेऽतिव्याप्तिर्विरोधिविषयिताप्रयुक्तत्वदलेनैव वारयितुं शक्यत इत्याशयेनेदम्। अत एव द्वितीयकल्पे यद्विषयकनिश्चयोत्तरानाहार्य्यमानसज्ञानत्वावच्छेदेन निरुक्तावगाहिताद्वयव्यतिरेक इत्यतोऽपि सिद्धसाधनसामान्यवारणं सम्भवतीत्याह मानसेति, साध्यनिश्चयोत्तरमित्यनुषज्यते। तेन पक्षधर्मिकसाध्यावगाहित्व-साध्यव्याप्यहेतुमत्तावगाहित्वयोः साध्यनिश्चयोत्तरमानसज्ञानाविरोधित्वात् तादृशमानसज्ञानेऽपि समावेशादित्यर्थः। तथा च सिद्धसाधनोत्तरमानसत्वावच्छेदेन निरुक्तावगाहिताद्वयस्य व्यतिरेको नास्तीति न कुत्रापि साध्यविशिष्टपक्षेऽतिप्रसङ्ग इति भावः। अत्र वदन्तीत्युक्त्यास्वरसः सूचितः, तद्बीजं तु सर्वत्र सर्ववस्तूनां भ्रमे मानाभावात् यत्र यस्य यद्व्याप्यवत्त्वस्य वा भ्रमो नास्ति तत्र तस्य साध्यतास्थले तदभावविशिष्टतद्वस्तुरूपबाधप्रभृतावव्याप्तिः, निरुक्तावगाहिताद्वयस्याप्रसिद्ध्या तद्व्यतिरेकस्य तत्रालीकत्वात्। किञ्च यत्र संयोगेन पर्वतादेः पक्षतावच्छेदकत्वं; यत्र वा पर्वतत्वादिप्रकारेणैव ह्रदादेः पक्षत्वं, तत्र पर्वतो वह्निमान् धूमादित्यादावाश्रयासिद्ध्यादावव्याप्तिः। एवं वह्निमत्पर्वतो निर्वह्नित्वव्याप्यजलत्ववान् निर्जलत्वादित्यादौ च वह्निविशिष्टपर्वतस्य हेत्वाभासत्वापत्तिः, निरुक्तोभयाभावस्यानाहार्य्यनिश्चयत्वविरोधिविषयिताप्रतियोगिकत्वात्, तस्य निश्चयोत्तरानुमितित्वावच्छेदेन वर्तमानत्वाच्च।

## दीधितिः

व्याप्तिविशिष्टतादृशहेतुवैशिष्ट्यस्य चावगाहिनो ज्ञानस्य यद्विषयकं ज्ञानं विरोधिविषयकं तत्त्वं तादृशज्ञानविरोधित्वं वा हेतुदोषत्वम्। ज्ञानविरोधित्वञ्च तद्विषयविषयकग्रहविरोधिग्रहविषयत्वम्। एवं-विधैव रीतिरुत्तरत्र सर्वत्र सव्यभिचारलक्षणादावनुसर्त्तव्या इत्यपि केचित्।

## जागदीशी

वस्तुतः—पर्वतो वह्निमान् धूमादित्यादौ महानसीयान्यवह्न्यंशे भ्रमदशाया-मुत्पद्यमानायां पर्वतो महानसीयवह्निमानित्यनुमितौ विरोधित्वेन पर्वतो महानसीयवह्न्यभाववानित्याद्यसङ्कीर्णबाधश्चिन्तामणिकृता वक्ष्यत इति तत्रा-प्युक्तलक्षणाव्याप्तिरिति द्रष्टव्यम्। केषाञ्चिल्लक्षणमाह तादृशपक्ष इत्यादि। प्रकृत-पक्षे प्रकृतसाध्यवत्त्वस्य प्रकृतसाध्यव्याप्यप्रकृतहेतुमत्त्वस्य चावगाहिनो ज्ञानस्य विरोधिविषयकं यद्विषयकं ज्ञानं तत्त्वं हेतुदोषत्वमित्यर्थः। ह्रदो वह्निमान् वह्नि-व्याप्यधूमवांश्चेत्यादिज्ञानस्य विरोधिविषयकत्वं ह्रदोनिर्वह्निरित्येवंविधबाधादि-ज्ञानस्यास्तीति तत्र लक्षणसमन्वयः। ननु विषयस्य पक्षधर्मिकसाध्यतद्व्याप्य-वत्तावगाहिज्ञानविरोधित्वं तादृशज्ञानसमानविषयकज्ञानप्रतिबन्धकग्रहविषयत्व-रूपमेवाग्रे वक्ष्यते, तथा च तावन्मात्रस्य सम्यक्त्वे यद्विषयकं ज्ञानं तादृश-विरोधिविषयकमित्यत्र विषयद्वयादिप्रवेशे गौरवमतस्तथैवाह तादृशज्ञान-

## दीधितिः

केचित्तु यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वम्। एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वम्। स चातिरिक्त एवान्योन्याभाव इति न वैयर्थ्यम्। पञ्चविधभेदोक्तिस्तु तत्सम्भवस्थलाभिप्रायेण, व्यभि-

चारादेः साध्यादिभेदनियन्त्रितत्वात्, शब्दाभेदमात्रस्य चाकिञ्चित्करत्वादिति प्राहुः।

## जागदीशी

विरोधित्वं वेत्यर्थः। पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानविरोधित्वं वेत्यर्थः। प्रतिबन्धकत्वरूपस्य तादृशज्ञानविरोधित्वस्य सव्यभिचारादावसम्भवाद् व्याचष्टे तज्ज्ञानेत्यादि। तद्विषयविषयकेति—पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानविषयविषयकग्रहप्रतिबन्धकीभूतग्रहविषयत्वमात्रोक्तौ निर्वह्निः पर्वतो वह्निमान् धूमादित्यादौ बाधाद्यव्याप्तिः, तादृशसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानस्याहार्य्यतया तत्प्रतिबन्धकग्रहाप्रसिद्धेरतस्तादृशज्ञानविषयविषयकग्रहप्रतिबन्धकत्वं निवेशितम्। तथा च निर्वह्निः पर्वतो वह्निमानित्याकारकज्ञानसमानविषयकस्य पर्वतो वह्निमानितिज्ञानस्य प्रतिबन्धको यः पर्वतो निर्वह्निरित्याकारकग्रहस्तद्विषयत्वमादायैव तत्र लक्षणस्य सङ्गमः। न च वह्निमान् वह्निव्याप्यधूमवांश्चायं पर्वतः पटवानित्याकारकस्य साध्यतद्व्याप्यवत्तावगाहिज्ञानसमानविषयकग्रहस्य प्रतिबन्धकं पर्वतो निष्पट इत्याकारकज्ञानमादाय तद्विषयस्य निष्पटत्वविशिष्टपर्वतादेर्धूमादिसद्धेतुस्थले दोषत्वापत्तिरिति वाच्यं, पक्षधर्मिकसाध्यतद्व्याप्यहेतुमत्त्वावगाहिज्ञानत्वाव्यापकविषयिताशून्यग्रहप्रतिबन्धकग्रहविषयत्वस्य विवक्षितत्वात्। उक्तसमूहालम्बनस्य च तादृशज्ञानत्वाव्यापकीभूतपटाद्यवगाहित्वात्, एवंविधैवेति — आहार्य्यव्याप्तिज्ञानमुपादाय तत्समानविषयकग्रहविरोधित्वघटितैव रीतिरुपादेयेत्यर्थः। अन्यथा पर्वतो धूमवान् धूमव्यभिचारिवह्नेरित्यादौ प्रकृतहेतुकव्याप्तिग्रहविरोधित्वाप्रसिद्ध्या तत्रत्यव्यभिचारादावव्याप्तिप्रसङ्गादिति भावः। यत्र स्थलविशेषे साध्यतद्व्याप्ययोः पक्षे समूहालम्बनभ्रमो न कस्यापि जातस्तत्रत्यदोषेऽव्याप्तिः। एवं पर्वतः पर्वतान्यो धूमादित्यादौ बाधादावव्याप्तिश्चेत्यादिदोषः केचिदित्युक्त्या सूचितः ॥०॥ द्वयोर्बहूनां च निर्धारणे तरतमयोर्विधानादन्यतरत्वाद्युक्तेरसार्वत्रिकत्वादाह तावदन्यान्यत्वमिति। न च गगनवत्प्रमेयो वह्निमान् घटत्वादित्यादौ गगनाभावविशिष्टप्रमेयरूपाश्रयासिद्धिमन्तर्भाव्यान्यान्यत्वं दुर्वचं निर्गगनप्रमेयान्याप्रसिद्धेरिति वाच्यम्, प्रमेयनिष्ठस्य गगनाभावस्यैव तत्राश्रयासिद्धित्वेन तमन्तर्भाव्यान्यान्यस्य सुप्रसिद्धत्वात् ॥०॥

यत्तु वह्न्यभावविशिष्टह्रदाद्यात्मकबाधप्रभृतीनां तादृरूप्येण दोषाणामपि ह्रदत्वादिमात्रेणादोषत्वाद् यत्र स्थले यादृशयादृशरूपेण दोषव्यवहारः प्रामाणिकस्तत्र तावदन्यान्यरूपवत्त्वमेव दोषत्वं वाच्यम्। तथा च गगनाभाव-विशिष्टप्रमेयस्यापि तादृरूप्येण दोषत्वमक्षतमेवेति। तन्मन्दम्,—यथा-कथञ्चित्सम्बन्धेन तादृशान्यतमरूपवत्त्वस्यातिप्रसङ्गात्, अनुगतानति-प्रसक्तैकसम्बन्धेन तद्वत्त्वस्य च सर्वत्र दोषे वक्तुमशक्यत्वादिति ध्येयम्।

ननु ह्रदाद्यात्मकपर्वतो वह्निमान् धूमादित्यत्र आश्रयासिद्धेरेव दोषत्वात् तावदन्यान्यत्वाप्रसिद्धिरत आह एकेति, — दोषविभाजकैकरूपमात्रस्थले इत्यर्थः। तेन पक्षनिष्ठह्रदान्यत्वरूपस्य ह्रदत्वाभावव्याप्यविशिष्टपक्षस्याश्रया-सिद्धित्वादेकव्यक्तिमात्रदोषस्थलाप्रसिद्धावपि न क्षतिः। ननु दोषपक्ष-केतरभेदानुमाने बाधत्वादेरेव हेतुत्वसम्भवे बाधाद्यन्यतमत्वस्य हेतुतायां व्यर्थविशेषणत्वान्नेदं लक्षणमत आह स चेति। न वैयर्थ्यं—धूमप्रागभाववद् भिन्नधर्मिकत्वादिति भावः। न चैकस्मिन् हेतौ द्वौ त्रयश्चत्वार एव वा दोषा इति तावदन्यान्यत्वमेव लक्षणं वाच्यम्। तथा च तदवान्तरधर्मेण पञ्चधा अग्रे विभागानुपपत्तिः, सामान्यतोऽवगतस्यैव विशेषरूपेण विभागस्य सम्प्रति-पन्नत्वादत आह पञ्चविधेति। तथा च यत्र ह्रदो वह्निमान् घटत्वादित्यादि-स्थले व्यभिचार-विरोधा-सिद्धि-सत्प्रतिपक्ष बाधाः पञ्चैव दोषाः सन्ति, तत्र तावदन्यान्यत्वस्यैव दोषलक्षणत्वात् तदवान्तररूपैः पञ्चभिरग्रे विभागस्य न व्याघात इति भावः। ननु विशिष्टदोषानुपादाय तावदन्यान्यत्वस्य लक्षणत्वे सर्वत्र हेतावनुगतलक्षणाभाव इत्यत आह व्यभिचारादेरिति। तथा च लक्ष्यस्याननुगतत्वादत्र लक्षणाननुगमेऽपि न क्षतिरिति भावः।

तत्त्वचिन्तामणिः।

ज्ञायमानं सद् यदनुमितिप्रतिबन्धकं तत्त्वं वा हेत्वा-भासत्वम्। दशाविशेषे हेत्वोरेवासाधारण-सत्प्रतिपक्षयो-राभासत्वात् तद्बुद्धेरप्यनुमितिप्रतिबन्धकत्वं। यद्यपि बाध-

सत्प्रतिपक्षयोः प्रत्यक्षशाब्दज्ञानप्रतिबन्धकत्वान्न लिङ्गाभासत्वं, तथापि ज्ञायमानस्याभासस्यात्र लक्षणम् ।

### दीधितिः

स्यादेतत् ,—शब्दोऽनित्यः शब्दत्वादित्यत्रासाधारणेऽव्याप्तिः, सर्वसाध्यवद्व्यावृत्तेस्तत्रासत्त्वात् । एवं शब्दोऽनित्यः कृतकत्वादित्यस्य सत्प्रतिपक्षे नित्यत्वव्याप्यादद्रव्यद्रव्यत्वादावपि शब्दवृत्तित्वविशिष्टपक्षस्य तद्वत्ताविरहादित्याशङ्क्यां तयोरलक्ष्यत्वेन निराकुरुते दशाविशेष इति । हेत्वोः—सद्धेत्वोः । असाधारणः—पक्षमात्रवृत्तिः । सन् प्रतिपक्षो विरोधिपरामर्शो यस्य स तथा,

### जागदीशी ।

दोषमात्रस्यैव स्वमते नित्यत्वाद् दशाविशेष इत्यादिग्रन्थस्य सद्धेतौ लक्षणार्थयोजकत्वासम्भवादलक्ष्यताप्रदर्शनाभिप्रायेण तमुत्थापयति स्यादेतदित्यादिना । अव्याप्तिरिति दुष्टलक्षणस्येत्यादि । साधननिष्ठस्य सर्वसाध्यवद्व्यावृत्तत्वस्य दोषतया तदप्रसिद्ध्यैव तद्वत्त्वरूपस्य दुष्टहेतुलक्षणस्याव्याप्तिरित्यत आह सर्वेत्यादि । तत्र शब्दत्वे, अद्रव्यद्रव्यत्वादावपीति—असमवेतद्रव्यत्वादावपीत्यर्थः । शब्दवृत्तित्वविशिष्ट इत्यादि,—पक्षवृत्तित्वविशिष्टस्यैव साध्याभावव्याप्यस्य सत्प्रतिपक्षतया केवलस्य तस्यादोषत्वादत आह पक्षस्येति । तद्वत्ताविरहादिति — नित्यत्वव्याप्यासमवेतद्रव्यत्ववत्त्वविरहादित्यर्थः । अलक्ष्यत्वं स्फुटीकर्तुमाह सद्धेतोरिति । ननु तयोरदुष्टत्वे कथ-

### तात्पर्यदीपिका

ज्ञायमानलिङ्गस्य कारणत्ववत्—ज्ञायमानस्य व्यभिचारादेरपि प्रतिबन्धकत्वं, तन्मते लक्षणमाह 'ज्ञायमानमिति'। अत्राप्यनुमितिपदं प्रकृतपक्षतावच्छेदकरूपेण प्रकृतपक्षे

## दीधितिः

तयोर्दशाविशेषे हेतौ सर्वसाध्यवद्व्यावृत्तस्य पक्षे साध्याभाव-व्याप्यवत्त्वस्य च भ्रमदशायामाभासत्वाद् अनुमित्यजनकत्वाद् तद्बुद्धेर्हेत्वादौ साध्यवद्व्यावृत्तत्वादिबुद्धेः प्रतिबन्धकत्वं परमायाति, न तु तद्विषयस्य दोषत्वम् असत्त्वात्। अन्यथा बाधभ्रमेणानुमित्यनुदयात् तस्यापि दोषत्वं स्यात्। को हि साध्याभाव-तद्व्याप्यवत्ताभ्रमयोरनुमितिविरोधित्वे विशेषः। निर्युक्तिकस्तु प्रवादो न श्रद्धेयः। यत्तु ज्ञानस्य यदनुमितिप्रतिबन्धकता-

### जागदीशी

मसाधारणादिपदेनोल्लेख इत्यतो व्याचष्टे असाधारण इत्यादि। स तथा-सत्-प्रतिपक्षपदबोध्यः, दुष्टत्वरूपस्याभासत्वस्यानङ्गीकारादन्यथा व्याचष्टे अनुमित्य-जनकत्वादिति। हेत्वोरेवेत्येवकारः प्रतिबन्धकत्वमित्यनन्तरं योज्य इत्याशयेन तादृशैवकारार्थं व्याकरोति परमायातीत्यादिना। असत्त्वात्—अप्रसिद्धत्वात्। अन्यथेति — प्रतिबन्धकज्ञानविषयीभूतस्य विशिष्टस्यासत्त्वस्थले दोषाभ्युपगम इत्यर्थः। तस्यापि—बाधभ्रमविषयस्यापि। असाधारण्यादिभ्रमदशायां सद्धे-तोरपि प्राच्यैर्लक्ष्यत्वस्वीकारादुक्तव्याख्यानमसङ्गतमित्यत आह निर्युक्तिक-स्त्विति। सत्प्रतिपक्षासाधारण्यानुपसंहारित्वानामनित्यदोषत्वमनङ्गीकुर्वतां मतमुत्थापयति यत्त्विति। द्वितीयलक्षणमनुसृत्याह तद्वत्त्वमिति। यद्विषयत्वे-नेत्यत्र विषयशब्दस्य स्वरूपपरत्वाद् तद्रूपेण ज्ञानस्यानुमितिप्रतिबन्धकत्व-मित्यर्थलाभादिति भावः।

### तात्पर्यदीपिका

प्रकृतसाध्यतावच्छेदकरूपेण प्रकृतसाध्यनिरूपितव्याप्तिप्रकारेण प्रकृतहेतुतावच्छेदकरूपेण प्रकृतहेतुवैशिष्ट्यावगाहिनी या बुद्धिस्तत्परं, तेन व्यभिचारादेः साक्षादनुमित्य-

## दीधितिः

वच्छेदकत्वं तद्वत्त्वं तत्प्रकारकप्रमाविषयत्वं च लक्षणार्थः। तच्च द्विविधं विषयरूपं साधारण्यादि, बाधे च प्रमितसाध्याभाववान् पक्षः, तद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वात्। अविषयरूपं च विरोधिसामग्रीकालीनत्वादिकं, तद्वत्त्वं च ज्ञानस्येव तद्विषयस्य हेतोरपीति, तन्न, तद्वत्त्वं हि हेतोर्नाभेदेन, बाधे तदभावात्। अत एव नाश्रयतया; वह्निव्यभिचारिद्रव्यत्वादिमति

## जागदीशी

यथार्थपदघटित—प्रथमलक्षणमनुसृत्याह तत्प्रकारकेति,— अनुमितिप्रतिबन्धकतावच्छेदकप्रकारकेत्यर्थः। मूलस्थ-प्रतियोगिपदस्य प्रतियोगितावच्छेदकपरत्वादिति भावः। तथा चानुमितिकारणीभूताभावप्रतियोगितावच्छेदकप्रकारकप्रमाविषयत्वं प्रथमलक्षणार्थं इति भावः। वस्तुतः प्रकारत्वविवक्षणेऽपि यथाश्रुतमूलासङ्गतिः, ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमते तेषां तादूरूप्येणैव साध्याभावज्ञानस्यानुमितिप्रतिबन्धकत्वोपगमादिति भावः। यद्यपि प्रथमलक्षणं व्याख्याय द्वितीयं व्याख्यातुमुचितम्, तथापि ग्रन्थलाघवार्थं व्यतिक्रमेण व्याख्यातमित्यवधातव्यम्। तच्चेति—प्रतिबन्धकतावच्छेदकं चेत्यर्थः। विषयरूपमिति,—प्रतिबन्धकज्ञानस्येत्यादिः। ननु साध्याभावप्रमैव बाध इति तत्र विषयतया प्रतिबन्धकतावच्छेदकत्वं दुर्घटमित्यत आह बाधे चेति। प्रमितेति प्राचां मतेन, तेषां तादूरूप्येणैव साध्याभावज्ञानस्यानुमितिविरोधित्वोपगमात्। अविषयरूपं चेति—अनुमितिप्रतिबन्धकज्ञानाविषयरूपं चेत्यर्थः। विरोधिसामग्रीकालीनत्वेति—साध्याभावानुमितिसामग्री-

## तात्पर्यदीपिका

प्रतिबन्धकत्वेऽपि नाव्याप्तिः। तथा च ज्ञानीय-यद्रूपावच्छिन्नविषयतासामान्यं प्रकृतानुमिति-

## दीधितिः

धूमेऽतिप्रसङ्गाच्च। साध्याभाववत्पक्षस्येव साध्याभाववद्वृत्ति-

हेतोर्ज्ञानस्य प्रतिबन्धकत्वात् साधारण्यादिविषयकत्वस्य ज्ञान-निष्ठस्यैव प्रतिबन्धकतावच्छेदकत्वात् सत्तादिसाध्यके ज्ञानेऽति-प्रसङ्गाच्च। यथा कथञ्चित् तद्वत्त्वस्य चातिप्रसञ्जकत्वात्। विरोधिसामग्रीसमवहितोऽपि च लिङ्गपरामर्शो न स्वसाध्यका-नुमितेः प्रतिबन्धको मणिसमवहितो वह्निरिव दाहस्य।

### जागदीशी

विशिष्टत्वादीत्यर्थः। वैशिष्ट्यञ्च सामानाधिकरण्यसम्बन्धेन ग्राह्यम्, तेन पुरुषान्तरीयसाध्याभावानुमितिसामग्रीकालीनस्य धूमपरामर्शस्य स्वहेतु-कानुमित्यप्रतिबन्धकत्वेऽपि न क्षतिः। आदिपदेनासाधारण्यादिग्रहकालीन-त्वोपग्रहः। ननु परामर्शस्य विरोधिसामग्रीकालीनत्वेऽपि तद्विषयस्य धूमादि-हेतोस्तथात्वाभावादव्याप्तिरत आह तद्वत्त्वं चेति। बाध इति—प्रायश इत्यादिः। तथा च धूमो वह्निमान् धूमादित्यादौ साध्याभावविशिष्टपक्षाभेदस्य हेतौ सत्त्वेऽपि ह्रदो वह्निमान् धूमादित्यादौ धूमादिहेतौ साध्याभाववत्पक्षाभेद-विरहादव्याप्तिरित्यर्थः। साध्याभाववद्वृत्तित्वविशिष्टहेतोरेव व्यभिचारतया तदभेदस्य व्यभिचारिमात्रे सम्भवाद् बाधपर्यन्तानुसरणम्। अत एव—बाधित-हेतावव्याप्तेरेव। नाश्रयतयेति-तद्वत्त्वमिति पूर्वेणान्वयः। ननु साध्याभाव-वत्पदस्येव पक्षनिष्ठसाध्याभावस्यापि बाधत्वात् तदाश्रयत्वमादायैव ह्रदो वह्निमान् धूमादित्यादिबाधिते नाव्याप्तिरत आह वह्निव्यभिचारीति। धूम इति—पर्वतादौ वह्नेः साध्यतास्थले इत्यादिः। तेन ह्रदपक्षकवह्निसाध्यकधूमस्य दुष्टतया नेष्टापत्तिसम्भवः।

### तात्पर्यदीपिका

प्रतिबन्धकतावच्छेदकं तद्रूपवत्त्वमित्यर्थः। तेन निर्वह्निपर्वतो वह्निमानित्यादौ नोक्तरीत्या आभासासम्भवः।

## दीधितिः

अथ यद्धर्मविशिष्टज्ञाने सत्यवश्यमनुमितिप्रतिबन्धस्त-

देवात्र प्रतिबन्धकतावच्छेदकमुक्तम् ; भवति च प्रतिबन्धकीभूत-विरोधिसामग्रीकालीनत्वादिविशिष्टे परामर्शे तथेति चेत् ; न वै कालादिसाधारणकारणघटिता सामग्री कापि प्रतिबन्धिका, विशेषतस्तत्र तत्सत्त्वे कार्योत्पादस्य दुर्वारत्वात्, किन्तु विरोधि-

जागदीशी

ननु वह्न्यभाववद्वृत्तित्वमात्रस्यानुमितिप्रतिबन्धकतावच्छेदकत्वात् तद्वत्त्वस्य च धूमे विरहात् कुतोऽतिव्याप्तिरत आह साध्याभाववदिति। तथा च वह्नि-व्यभिचारिद्रव्यत्वमपि विषयतयाऽनुमितिप्रतिबन्धकतावच्छेदकमिति तद्वत्त्व-मादायातिप्रसङ्गो युक्त इति भावः। ननु तत्पक्षकतत्साध्यकतद्धेतुकानुमिति-प्रतिबन्धकतावच्छेदकं वक्तव्यम्। तथा च वह्निव्यभिचारिद्रव्यत्वस्य धूमहेतु-कानुमितिप्रतिबन्धकतावच्छेदकत्वाभावान्नातिव्याप्तिरत आह साधारण्यादीति। ज्ञानधर्मिकसत्ताभाववद्वृत्तित्वप्रकारकनिश्चयत्वस्य ज्ञानहेतुकसत्तासाध्यका-नुमितिप्रतिबन्धकतावच्छेदकत्वात् तदाश्रयत्वमादाय सत्तासाध्यकज्ञानादि-हेतावतिव्याप्तिरित्यर्थः। ननु वैशिष्ट्यविषयित्वान्यतरसम्बन्धेन योऽनुमिति-प्रतिबन्धकतावच्छेदको धर्मस्तद्वत्त्वमित्यर्थः, विरोधिसामग्रीविशिष्टस्य परा-मर्शत्वेन बाधादिविषयकत्वेन चानुमितिप्रतिबन्धकत्वात्। तथा च साधा-रण्यादिविषयकत्वस्य तादृशान्यतरसम्बन्धेन प्रतिबन्धकतानवच्छेदकत्वात् तद्वत्तामादाय नातिव्याप्तिः ; स्वरूपसम्बन्धेनैव तस्य तथात्वादत आह यथा-कथञ्चित् तद्वत्त्वस्येति, — प्रतिबन्धकतावच्छेदककोटिनिविष्टतामात्रेण यत्-प्रतिबन्धकतावच्छेदकं तद्वत्त्वस्येत्यर्थः। अतिप्रसञ्जकत्वादिति, —पर्वतो न वह्निमानित्याकारकज्ञानत्वेन प्रतिबन्धकतायां वह्न्यभावस्यापि प्रविष्टत्वात् तदाश्रयत्वमादाय पर्वतो वह्निमान् धूमादित्यत्र सद्धेतावतिव्याप्तत्वादिति भावः। ननु वैशिष्ट्यविषयितान्यतरसम्बन्धेन प्रतिबन्धकतावच्छेदकत्वं यत्र पर्याप्तं तादृशधर्मवत्त्वं वाच्यम् तथा च विषयितयाऽनुमितिप्रतिबन्धकता-वच्छेदकत्वस्य साध्याभावमात्रेऽपर्याप्तत्वात् तद्वत्त्वमादाय नातिव्याप्तिरत आह विरोधिसामग्रीति। तथा च विरोधिसामग्रीविशिष्टवह्निपरामर्शत्वेन वह्न्यनुमितिप्रतिबन्धकत्वाभावेन विरोधिसामग्र्याः प्रतिबन्धकतानवच्छेदकत्वात्

सत्प्रतिपक्षितसद्धेतावव्याप्तिरिति भावः। उक्ताव्याप्तिं निराकर्तुं प्रतिबन्धकतावच्छेदकपदस्य प्रतिबन्धकपरत्वमाशङ्कते अथेति। ज्ञाने हेतुज्ञाने, तदेवेति,—तथा च स्वलिङ्गकप्रकृतपक्षकप्रकृतसाध्यकानुमितिप्रतिबन्धकीभूतधर्मवत्त्वमेव दुष्टहेतुत्वं, ज्ञायमानस्य व्यभिचारादेरनुमितिप्रतिबन्धकत्वोपगमाच्च न व्यभिचारिबाधितहेतावव्याप्तिरित्याशयः। सत्प्रतिपक्षिते लक्षणं सङ्गमयति भवति चेति। प्रतिबन्धकीभूतेति—स्वलिङ्गकप्रकृतसाध्यानुमितिप्रतिबन्धकीभूतेत्यर्थः। कालीनत्वविशिष्टेत्यत्र कालीनत्वं कालघटितसम्बन्धेन वैशिष्ट्यलाभार्थम्। तथा—साध्यानुमितिप्रतिबन्धः, विरोधिसामग्र्याः प्रतिबन्धकत्वे सत्येव तद्वत्तामादाय सत्प्रतिपक्षितस्य संग्रहः स्यात्, तदेव त्वसिद्धमित्याह न वै इति। अनुमित्यादिकं प्रति प्रत्यक्षसामग्र्याः प्रतिबन्धकत्वस्यापि प्रत्यक्षोपधायकतत्तत्सन्निकर्षादिव्यक्तिष्वेव व्यवस्थापितत्वादिति भावः। अनुमित्यादौ कथञ्चित् प्रत्यक्षादिसामग्रीत्वेन प्रतिबन्धकत्वस्वीकारेऽपि सत्प्रतिपक्षस्थले साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धकत्वं दुर्घटमित्याह

## दीधितिः

परामर्शस्तथा ; यदि च यत्सत्त्वेऽपि तत्साध्ये बाधावताराान्नानुमितिप्रतिबन्धः प्रामाणिकस्तदाऽप्रामाण्यग्रहाभावस्यैव तदभावस्यापि वैशिष्ट्यं तत्र निवेश्यताम्, यथा च भ्रमप्रमासाधारणविरोधिपरामर्शसत्त्वे नानुमितिस्तथा तथाविधबाधादिग्रहेऽपीत्यति-

## जागदीशी

विशेषतस्तत्रेति। न सामग्री प्रतिबन्धिकेत्यनुपज्यते। सामग्रीत्वेन प्रतिबन्धकत्वाभावे हेतुमाह तत्सत्त्व इति। साध्याभावानुमितिरूपकार्योत्पादापत्तेरित्यर्थः। तथा च सत्प्रतिपक्ष एव व्याहन्येतेति भावः। ननु विरोधिसामग्र्याः प्रतिबन्धकत्वानभ्युपगमे सत्प्रतिपक्षस्थले साध्यानुमितेः कथं नोत्पाद इत्यत आह किन्त्विति। तथा साध्यानुमितिप्रतिबन्धकः। ननु सत्यपि विरोधिपरामर्शे पक्षस्य साध्याभावशून्यत्वनिश्चयदशायां साध्यानुमित्युत्पत्त्या

तस्य प्रतिबन्धकत्वं दुर्घटमत आह यदि चेति। तत्साध्य इति—विरोधिपरामर्शीयसाध्य इत्यर्थः। नानुमितीति—न प्रकृतसाध्यानुमितिप्रतिबन्धक इत्यर्थः। विरोधिसाध्यस्य बाधावतारेण विरोधिपरामर्शस्याप्रामाण्यप्रसञ्जने तत एव न तस्य साध्यानुमितिप्रतिबन्धकत्वम्। अन्यथा तु प्रतिबन्धकत्वमिष्टमेव नव्यैरित्याशयेन यदि चेत्युक्तम्। तदभावस्यापि—तादृशबाधनिश्चयाभावस्यापि, तत्र विरोधिपरामर्शस्य विरोधितायां, निवेश्यतामिति अवच्छेदकत्वेनेत्यादि।

## दीधितिः।

प्रसङ्गः। न चातीतादौ लिङ्गे विरोधिपरामर्शकालीनत्वमपि। यदपि यद्विषयत्वेन ज्ञानस्यानुमितिप्रतिबन्धकत्वं तद्वत्त्वमेव वाच्यम्, सत्प्रतिपक्षे च विरोधिव्याप्त्यादिकमेव तथा। तद्वत्त्वमपि हेतोस्तज्ज्ञानरूपसम्बन्धेन, तस्य समूहालम्बनरूपतया हेतुद्वयविषयकत्वादिति। तदपि तुच्छम्।

### जागदीशी

नन्वेवं विरोधिसामग्र्या अप्रतिबन्धकत्वेऽपि स्वलिङ्गकानुमितिप्रतिबन्धकीभूतविरोधिपरामर्शवत्तामादायैव सत्प्रतिपक्षिते लक्षणं यास्यतीत्यत आह यथा चेति। तथाविधेति भ्रमप्रमासाधारणेत्यर्थः। अतिप्रसङ्ग इति। पर्वतो वह्निमान् धूमादित्यत्र वह्न्यभावमादाय धूमादावतिप्रसङ्ग इत्यर्थः। दूषणान्तरमाह न चातीतादाविति। कालीनत्वमपीति। तथा च भिन्नकालीनयोर्वैशिष्ट्यविरहादतीतसत्प्रतिपक्षितसद्धेतावनुमितिप्रतिबन्धकीभूतविरोधिपरामर्शवत्त्वं केनापि सम्बन्धेन नास्तीति तत्राव्याप्तिरिति भावः। स्वसमानकालीनज्ञानविषयत्वादिसम्बन्धेनातीतलिङ्गस्यापि कथञ्चिद्विरोधिपरामर्शवत्त्वोपगमेऽपि परामृष्टत्वोत्तीर्णतादशायामपि सद्धेतोः कालिकादिसम्बन्धेन स्वलिङ्गकानुमितिप्रतिबन्धकीभूतविरोधिपरामर्शवत्त्वात् तत्रातिव्याप्तिरित्याशयः। सर्वत्र विषयरूपमेव प्रतिबन्धकतावच्छेदकं लक्षणे निवेश्यमिति मतं दूषयति यदपीत्यादिना। व्याप्त्यादिकमित्यादिना पक्षधर्मत्वादेः परिग्रहः। तथा प्रतिबन्धकतावच्छेदकम्।

## दीधितिः ।

साध्याभाववत्पक्षविषयत्वेन तादृशपक्षज्ञानप्रमाविषयत्वेन वा ज्ञानस्य प्रतिबन्धकत्वं तस्य च साध्यवत्यपि पक्षे सम्भवादतिव्याप्तेः । विशिष्टविषयत्वेन प्रतिबन्धकत्वम् विशिष्टं च तत्राप्रसिद्धमिति चेत् तर्हि किं सर्वत्र सत्प्रतिपक्षिते साध्याभावव्याप्यवान् पक्षः प्रसिद्धः ? यथा कथञ्चित् सम्बन्धेन तद्वत्त्वं चातिप्रसक्तम् । धूमादेरपि ज्ञान-

## जागदीशी

ननु सत्प्रतिपक्षितसद्धेतौ साध्याभावव्याप्तिविरहात् तत्राव्याप्तिरत आह तद्वत्त्वमपीति । तज्ज्ञानेति विरोधिव्याप्त्यादिज्ञानेत्यर्थः । साध्याभाववदिति । पक्षधर्मिकसाध्याभाववत्तानिश्चयत्वेनेत्यर्थः । प्रमाविषयकत्वेनेति । प्राचां मतेन तस्य चेति । पक्षधर्मिकसाध्याभाववत्ताज्ञानस्य चेत्यर्थः । तथाच पर्वतो द्रव्यं धूमादित्यत्र पर्वतो न द्रव्यमित्येवं बाधज्ञानसम्बन्धेन द्रव्यत्वाद्यभावस्य धूमे सत्त्वादव्याप्तिरित्यर्थः । ननु यादृशविशिष्टविषयकत्वेनानुमिति-प्रतिबन्धकत्वं तद्वत्त्वं वाच्यं तथाच द्रव्यत्वाभावविशिष्टपर्वताप्रसिद्ध्यैव नोक्तस्थलेऽतिव्याप्तिरित्याशङ्कते विशिष्टेति । तत्र साध्यवत्पक्षस्थले पर्वतो वह्निमान् धूमादित्यादौ सत्प्रतिपक्षितसद्धेतावव्याप्तिप्रसङ्गाद्विशिष्टविषयकत्वेन प्रतिबन्धकत्वं निवेशयितुमशक्यमित्याह-तर्हि किमिति । जलं वह्निमद्धूमादित्यादौ सत्प्रतिपक्षिते साध्याभावव्याप्यवत्पक्षस्य प्रसिद्धत्वात् सर्वत्रेत्युक्तम् । ननु पर्वतो द्रव्यं धूमादित्यादौ बाधभ्रमस्य सम्बन्धत्वे मानाभावान्नातिव्याप्तिः ; विशेषदर्शिनामपि विरोधिपरामर्शदशायां धूमादौ सत्प्रतिपक्षितोऽयमिति

## दीधितिः ।

रूपेण तदाश्रयाश्रयत्वादिना वा सम्बन्धेन व्यभिचारादिमत्त्वात् । यादृशसम्बन्धावगाहित्वेन ज्ञानस्य प्रतिबन्धकत्वं तेन तद्वत्त्वं च न सर्वत्र सत्प्रतिपक्षिते हेतावस्ति च क्वचित् सद्धेताविति कृतं

जागदीशी

व्यवहारात् तत्रैव विरोधिव्याप्त्यादेर्ज्ञानस्य सम्बन्धत्वकल्पनादत्र तु बाधितो हेतुरित्यादिव्यवहारविरहादत आह यथा कथञ्चिदिति। ज्ञानरूपेणेति धूमो वह्निव्यभिचारीति ज्ञानरूपेणेत्यर्थः। बाधभ्रमस्येव व्यभिचारभ्रमस्याप्युक्त-क्रमेण सम्बन्धत्वे मानाभावादाह तदाश्रयेति। व्यभिचाराश्रयीभूतं यद्-द्रव्यत्वादिकं तदाश्रयत्वेत्यर्थः। आदिना कालिकादेः परिग्रहः। ननु यादृश-सम्बन्धेन यत्प्रकारकज्ञानत्वेनानुमितिप्रतिबन्धकत्वं तेन सम्बन्धेन तद्वत्त्व-स्योक्तत्वान्न धूमेऽतिप्रसक्तिरत आह यादृशेति। न सर्वत्रेति। तथा च पर्वतो द्रव्यं धूमादित्यादौ सत्प्रतिपक्षितसद्धेतावव्याप्तिः प्रतिबन्धकज्ञानविषयेण समवायसम्बन्धेन वह्न्यभावव्याप्यधूमत्वादेः साधने सत्त्वात् सर्वत्रेत्युक्तम्। ननु यादृशसम्बन्धावगाहियत्प्रकारकज्ञानत्वेन प्रतिबन्धकत्वं तादृशज्ञानतादृश-सम्बन्धान्यतरसंसर्गेण तद्वत्त्वं वाच्यमतो नोक्तस्थलेऽव्याप्तिः। ज्ञानसम्बन्धे-नैव हेतोः साध्याभावव्याप्यगुणत्वादिमत्त्वादत आह अस्ति चेति। तेन तद्वत्त्वं चेत्यनुषज्यते। तथाच पर्वतो वह्निमान् धूमादित्यत्र बाधबुद्धेः स्वरूपादि-सम्बन्धावगाहितयैव प्रतिबन्धकत्वात् तादृशसम्बन्धेन वह्न्यभावस्य धूमे सत्त्वाद-तिव्याप्तिरित्यर्थः। पर्वतो द्रव्यं धूमादित्यत्र द्रव्यत्वाद्यभावस्य स्वरूपसम्बन्धेन

दीधितिः।

पल्लवितेन। यद्यपीति। स्थाणुत्वाभावस्य तद्व्याप्यकरादेश्च निश्चये स्थाणुत्वप्रत्यक्षशाब्दयोरनुदयात्। न चैवं नरशिरः कपालं शुचि प्राण्यङ्गत्वादित्यादिनाप्यागमप्रतिरोधः स्यात्; तत्रानु-कूलतर्काभावेन बलवत्तरागमविरोधेन च व्याप्तिनिश्चयस्यानु-

जागदीशी।

धूमादावभावात् क्वचिदित्युक्तम्। मूले यद्पीत्यादिकं तल्लिङ्गकतत्साध्यकतत्-पक्षकानुमितित्वावच्छिन्नं प्रत्येव तादृशव्यभिचारज्ञानत्वादिना स्वतः प्रतिबन्ध-कत्वं तद्घटितलक्षणाभिप्रायेणोक्तमन्यथा व्यभिचारादिज्ञानस्यापि व्याप्त्यादि-प्रत्यक्षविरोधत्वाद् बाधसत्प्रतिपक्षमात्रमधिकृत्य शङ्कानुपपत्तेरनुमितितत्-

कारणपरामर्शान्यतरमात्रं प्रति ज्ञायमानं यत्प्रतिबन्धकं स एव लिङ्गाभास इत्याशयेन शङ्क्येमिति ध्येयम्। बाधसत्प्रतिपक्षयोः प्रत्यक्षादिप्रतिबन्धकत्वे हेतुमाह स्थाणुत्वाभावस्येत्यादिना। एवं शाब्दबोधेऽपि बाधसत्प्रतिपक्षयो-र्विरोधित्वे आगमेति। मल-मूत्रपूरीषास्थिनिर्गतं ह्यशुचि स्मृतमित्याग-मस्येत्यर्थः। तत्र प्राण्यङ्गत्वादि हेतौ अनुकूलतर्कस्य व्याप्तिग्रहे स्वतोऽनु-पयोगादाह बलवत्तरेति। शौचानुमाने साध्यप्रसिद्धादेरागममात्राधीनतया उपजीव्यजातीयत्वेन मलमूत्रेत्याद्यागमस्य बलवत्तरत्वं बोध्यम्। अनुत्पत्ते-रिति। तथाच प्रतिबन्धकसत्त्वान्नागमविरोध इति भावः।

तत्त्वचिन्तामणिः।

यद्वा प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्न-ज्ञानेऽप्रामाण्यं ज्ञाप्यतेऽनुमितौ तूत्पत्तिरेव प्रतिबध्यते। ते च सव्यभिचार-विरुद्ध-सत्प्रतिपक्षासिद्धबाधिताः पञ्चेति।

महामहोपाध्याय श्रीमद्गङ्गेशोपाध्यायकृते तत्त्वचिन्तामणौ अनुमानाख्यद्वितीयखण्डे सामान्यनिरुक्तिः समाप्ता ॥०॥

दीधितिः।

मितेश्चानुत्पत्तेरिति भावः। यद्वेत्याद्यभ्युच्चयमात्रम्। प्रत्यक्षं प्रत्यानुमानिकबाधादिनिश्चयस्याप्रतिबन्धकत्वेऽपि शाब्दं प्रति प्रतिबन्धकत्वात् योग्यताज्ञानेनान्यथासिद्धत्वात् तदभावो न तत्र

हेतुरिति चेदेवमप्युपनीतभानविशेषं प्रति तत्त्वेन हेतुताया दुर्वारत्वादिति ।

महामहोपाध्याय श्रीमद्रघुनाथशिरोमणिभट्टाचार्यविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिः समाप्ता ॥०॥

जागदीशी ।

अभ्युच्चये हेतुमाह प्रत्यक्षं प्रतीति । लौकिकप्रत्यक्षं प्रतीत्यर्थः । बाधादीत्यादिपदेन ग्राह्याभावव्याप्यवत्त्वोपग्रहः । शङ्कते योग्यताज्ञानेति । तदभावो बाधनिश्चयाद्यभावः, तत्र शाब्दबोधे, शाब्दं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वे योग्यताज्ञानोत्तरं लौकिकात्मकबाधनिश्चये सत्यपि शाब्दधीः स्यादिति दोषं स्फुटतयोपेक्ष्याह एवमपीति । उपनीतभानविशेषमिति दोषविशेषजन्योपनीतभानं प्रतीत्यर्थः । तत्त्वेन बाधनिश्चयाभावत्वेन यद्यपि बाधनिश्चयदशायामनुमितेः स्मृतेश्चानुत्पादादुपमितिस्मृती प्रत्यपि तदभावस्य हेतुत्वं वक्तुमुचितं तथाप्युपमितेरतिरिक्तप्रमात्वं विप्रतिपत्तेर्बाधदशायां विशिष्टस्मरणानुत्पादस्य चोद्बोधकविरहेणापि सम्भवात् तत्र बाधाद्यभावस्य हेतुत्वे मानाभाव इत्याशयः ।

इति महामहोपाध्याय श्रीमज्जगदीशतर्कालङ्कारविरचिता हेत्वाभासे सामान्यनिरुक्तिदीधितिव्याख्या समाप्ता ॥०॥

तात्पर्यदीपिका ।

असिद्धविरुद्धसव्यभिचारानध्यवसिताश्चत्वारो हेत्वाभासाः "अप्रसिद्धोऽनपदेशोऽसन्सन्दिग्धश्चानपदेशः" (अः ३, आ. १, सू १५ वैः) इति वैशेषिकसूत्रोक्ता "एतेनासिद्धविरुद्धसन्दिग्धानध्यवसितवचनानामनपदेशत्वमुक्तं भवति" इति प्रशस्तपादभाष्योक्ताः, अनध्यवसितोऽसाधारणः, न तु बाधप्रतिरोधौ हेत्वाभासाविति वैशेषिकसिद्धान्तनिराकरणाय स्वमतसिद्धान् हेत्वाभासान् विभजते ते चेति आभासीभूता हेतव इति शेषः । सव्यभिचारेति व्यभिचारात्मकेन दोषेण सह वर्तत इति व्युत्पत्त्या व्यभिचारीत्यर्थः । विरुद्धेति साध्यासमानाधिकरणो व्यभिचारित्वरूपश्चानुपदमेव पृथक् पृथक् विवेचयिष्यते ।

हेतुर्विरोधस्तादात्म्येन तद्वान् हेतुर्विरुद्धः, एतज्ज्ञानञ्च साध्यसामानाधिकरण्यघटितव्याप्तिप्रकारकज्ञाने सामानाधिकरण्यांशे प्रतिबन्धकम्। उदाहरणं तु समवायेन साध्यहेतुको गोत्ववानश्वत्वादित्यादिरिति मणिकृतः।

प्राञ्चस्तु साध्यासामानाधिकरण्यं विरोधस्तद्वान् हेतुर्विरुद्ध इत्याहुः, तदसत्। केवलसाध्यासामानाधिकरण्यरूपविशिष्टनिरूपितविषयित्वस्य केवलसाध्यासामानाधिकरण्यविषयकज्ञाने हेत्वन्तरविशेष्यकतत्प्रकारकज्ञाने च सत्त्वेन प्रकृतहेतुकानुमितितत्कारणज्ञानप्रतिबन्धकतातिरिक्तवृत्तितया केवलस्य तस्य हेतुदोषत्वासम्भवात्; अतएवाग्रेऽपि सर्वत्र विशेष्यान्तर्भाव इति बोद्धव्यम्।

सत्प्रतिपक्षेति सत्प्रतिपक्षपदस्य नीलादिपदवद्धर्मधर्म्युभयवाचकत्वात् सत्प्रतिपक्षित इत्यर्थः। साध्याभाववान् पक्षः सत्प्रतिपक्षः, वृत्तिमत्त्वादियथाकथञ्चित्सम्बन्धेन तद्वान् हेतुः सत्प्रतिपक्षितः, अयञ्च स्वरूपसन्नेव साक्षादनुमितिविरोधी, अतएव सद्धेतुरपि साध्याभावव्याप्यवत्तापरामर्शकाले सत्पक्षितः, बाधितोऽपि साध्याभावव्याप्यवत्तापरामर्शदशायां कदाचिदसत्प्रतिपक्षित इत्याहुः। एतन्मते यथाश्रुतं न दोषलक्षणं किन्तु दुष्टलक्षणमेवेति न तत्राव्याप्तिः।

असिद्धेति, असिद्धस्त्रिविधः स्वरूपासिद्ध आश्रयासिद्धो व्याप्यत्वासिद्धश्चेति। तत्र हेत्वभाववान् पक्षः स्वरूपासिद्धः, कालिकादियत्किञ्चित्सम्बन्धेन तद्वान् हेतुः स्वरूपासिद्धः, एतज्ज्ञानञ्च पक्षधर्मतांशे परामर्शविरोधि; उदाहरणं तु ह्रदो वह्निमान् धूमादित्यादि। पक्षविशेषणासिद्धिराश्रयासिद्धिः, सा च पक्षतावच्छेदकाभाववान् पक्षः, वृत्तिमत्त्वादियत्किञ्चित्सम्बन्धेन हेतोस्तद्वत्त्वं एतज्ज्ञानञ्च पक्षतावच्छेदकवैशिष्ट्यांशेऽनुमितिपरामर्शयोरुभयोरेव विरोधि; उदाहरणं तु काञ्चनमयपर्वतो वह्निमानित्यादि। व्याप्यत्वासिद्धिस्त्रिविधा, साध्यविशेषणासिद्धिः, हेतुविशेषणासिद्धिः, व्याप्त्यभावरूपासिद्धश्च, तत्र साध्यतावच्छेदकाभाववत्साध्यं साध्यविशेषणासिद्धिः, सामानाधिकरण्यादियत्किञ्चित्सम्बन्धेन हेतोस्तद्वत्त्वम्, एतज्ज्ञानञ्च साध्यतावच्छेदकवैशिष्ट्यांशेऽनुमितिपरामर्शयोर्विरोधि; उदाहरणं तु पर्वतः काञ्चनमयवह्निमानित्यादि। हेतुतावच्छेदकाभाववान् हेतुः, हेतुविशेषणासिद्धिः, तादात्म्यसम्बन्धेन हेतोस्तद्वत्त्वम्; एतज्ज्ञानं हेतौ हेतुतावच्छेदकवैशिष्ट्यांशे परामर्शविरोधि, उदाहरणं तु पर्वतो वह्निमान् काञ्चनमयधूमादित्यादि। व्याप्त्यभाववान् हेतुर्व्याप्यत्वासिद्धिः, तादात्म्येन तद्वान् हेतु व्र्याप्यत्वासिद्धिः; एतज्ज्ञानञ्च हेतौ व्याप्तिज्ञानविरोधि; उदाहरणं तु व्यभिचारिमात्रमेव।

**बाधितेति** साध्याभाववान् पक्षो बाधः, वृत्तिमत्तादियत्किञ्चित्सम्बन्धेन तद्वान् हेतुर्बाधितः ; एतज्ज्ञानञ्च साक्षादेवानुमितिविरोधि, उदाहरणं तु ह्रदो वह्निमान् धूमादित्यादीति संक्षेपतः सामान्यतो दूषकताबीजनिर्णय इति मथुरानाथः ।

शाकेऽब्धिसिद्धिवसुचन्द्रमितेऽह्निकाव्ये
शुद्धे महालयदिनेऽपचितिर्गिरो नः ।
सम्पादिता गुरुवचःसितपद्मपुष्पैः
प्रीतस्तु तेन जननी मनसो विशुद्ध्यै ॥

इति मेदिनीपुरमण्डलान्तर्गत 'बालिघाइ' माधवपुरदुर्गनिवासि-
**श्रीयादवेन्द्रनाथराय-न्यायतर्कतीर्थ-**
देवशर्मसङ्कलिता जागदीशीतात्पर्यदीपिका समाप्ता ॥०॥
ॐ शुभं भूयात् समेषाम् ॥०॥

---

# शुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | ११ | तिर्णयादि | निर्णयादि |
| ३ | १२ | जानाते | जानीते |
| ४ | ३ | पदकदेश | पदैकदेश |
| ४ | २५ | साथनं | साधनं |
| ५ | २४ | तत्त्वतिर्णय | तत्त्वनिर्णय |
| ६ | ११ | जन्यासुमिति | जन्यानुमिति |
| ११ | ४ | निरूपितस्य | निरूपितत्वस्य |
| ११ | ८ | लिङ्गापधान | लिङ्गोपधान |
| १३ | २४ | व्यरिरेक | व्यतिरेक |
| १५ | १४ | स्वविषप्रकृतहेतुता | स्वविषयप्रकृतहेतुता |
| ,, | २२ | समुहामम्बनाप्रसिद्धि | समूहालम्बनाप्रसिद्धि |
| १७ | १७ | सता | सती |
| २८ | २२ | धर्मप्रहस्यापि | धर्मग्रहस्यापि |
| २९ | १४ | यद्रूपवच्छिन्नत्वनिष्ठ | यद्रूपावच्छिन्नत्वनिष्ठ |
| ३१ | ६ | स्वानवछिद्गन्नप्रकारता | स्वानवच्छिन्नप्रकारता |
| ३३ | ६ | प्रतिवम्बन्धकतावतिरिक्त | प्रतिबन्धकतानतिरिक्त |
| ,, | १८ | वह्नः | वह्नेः |
| ,, | २१ | वतत् | तत् |
| ३४ | १३ | निनेशेनैवोपपत्ते | निवेशेनैवोपपत्ते |
| ,, | २८ | संय्करादौ | संस्कारादौ |
| ३६ | २२ | प्रतिबन्धरूता | प्रतिबन्धकता |
| ,, | ,, | सम्बन्धेकल्प्यते | सम्बन्धेन कल्प्यते |
| ४१ | १६ | तदुत्तररमसुमितौ | तदुत्तरमनुमितौ |
| ४२ | ११ | वशिष्टमेव | विशिष्टमेव |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४३ | २४ | साध्यतास्तले | साध्यतास्थले |
| ४४ | १६ | प्रतियोषिक | प्रतियोगिक |
| ४५ | २२ | संदर्भे | सन्दर्भे |
| ,, | २४ | आहार्य्य | आहार्य |
| ,, | २६ | वह्निमाननित्यदा | वह्निमानित्यादौ |
| ४६ | ७ | प्रतियौगिकन्वस्य | प्रतियोगिकत्वस्य |
| ५६ | १७ | साध्याभाववदवृत्तित्वरूपाया | साध्याभाववदवृत्तिरूपाया व्याप्तेः |
| ५७ | २ | सामानाछिकरण्येन | सामानाधिकरण्येन |
| ,, | २६ | देषत्वापत्ति | दोषत्वापत्ते |
| ६४ | २१ | मानज्ञानोत्पादादिति | मानसज्ञानोत्पादादिति । |
| ६६ | १७ | प्रदविषयत्वस्य | प्रहविषयत्वस्य |

———